लक्षणासम्भवात्। रेफादुत्तरस्य तु प्रकृतात् पृथक्त्वाभावान्नायं विधिः। किन्तु मध्यस्थसकारोत्तरादुकारात् पृथक्त्वं। तथा सत्येकान्तरत्वाभावस्तदवस्थः(१) एवेति लक्षणमिदमव्यभिचरितम्॥

## अकारार्द्धमैकारौकारयोरादिः॥ २६॥

ऐकारस्यौकारस्य च 'आदिः', 'अकारार्द्धं,' भवति। अकारस्यार्द्धकालसम इत्यर्थः। अकारस्यार्द्धम्, अकारार्द्धम्॥

## संवृतकरणतरमेकेषां॥ २७॥

सान्निध्यादकारार्द्धमिति लभ्यते। 'एकेषां,' मते तदकारार्द्धं 'संवृतकरणतरं,' भवति। संवृतानि, सन्निकृष्टानि, करणानि, यस्य तत्, संवृतकरणम्। अतिशयेन संवृतकरणं, संवृतकरणतरम्॥

## इकारोऽध्यर्द्धः पूर्व्वस्य शेषः॥ २८॥

'पूर्व्वस्य' ऐकारस्येत्यर्थः। अधस्तादैकारौकारयोः सहोच्चरितत्वात्। 'अध्यर्द्धः,' 'इकारः,' ऐकारस्य, 'शेषः,' भवति। अधिकमर्द्धं यस्याऽसावध्यर्द्धः॥

## उकारस्तूत्तरस्य॥ २९॥

'उत्तरस्य' औकारस्येत्यर्थः। अध्यर्द्धः, 'उकारः,' औकारस्य

---

१ एकान्तराभावस्तदवस्थ इति ख, ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

शेषः(१) भवति। यथानयोरुभयोरप्यादिरकार एव, तद्वदिकार-एव(२) शेषः प्रसक्तः। तन्निषेधति 'तु' शब्दः॥

## अनुस्वारोत्तमा अनुनासिकाः॥ ३०॥

'अनुस्वारः,' च 'उत्तमाः,' च 'अनुनासिकाः,' भवन्ति। नासिकामनुवर्त्तन्त इत्यनुनासिकाः (३)। यथा अनुस्वारः, योंऽशुम्(४)। उत्तमाश्च, प्रत्यङ् होतारम्। प्राञ्चमुप(५)॥

## स्वराणां यत्रोपसंहारस्तत् स्थानं॥ ३१॥

'स्वराणां,' 'तत् स्थानं,' भवति, 'यत्रोपसंहारः,' स्यात्। 'उपसंहारः' नाम संश्लेषविशेषः(६)॥

## यदुपसंहरति तत् करणम्॥ ३२॥

सान्निध्यात् स्वराणामिति लभ्यते। स्वराणां 'तत् करणं,' भवति, 'यत्,' स्वरान् 'उपसंहरति' प्रापयति स्वस्थानम्(७)। यथा, जिह्वाग्रमृकारऌकारेत्यादि।

---

१ औकारशेष इति इ० मु० पुस्तकपाठः।

२ आदिरकारस्तद्वदिकार एवेति क, चिह्नितपुस्तकपाठः।

३ भवन्तीति क, चिह्नितपुस्तकेऽधिकः पाठः।

४ योंऽशुं स्तृणातीति ग, चिह्नितपुस्तकपाठः।

५ प्राञ्चमित्यादि इति ग, चिह्नितपुस्तकपाठः।

६ उपश्लेषविशेष इति इ० मु० पुस्तकपाठः।

७ प्रापयति तत् स्थानमिति क, चिह्नितपुस्तकपाठः। प्रापयति तत् करणमिति ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

## अन्येषान्तु यत्र स्पर्शनं तत् स्थानम् ॥ ३३ ॥

स्वरेभ्यः 'अन्येषां' वर्णानां, 'तत् स्थानं,' 'यत्र स्पर्शनं,' भवेत्। अत्र व्यञ्जनानां संश्लेषमात्रं कथ्यते। स्वराणान्तु पुरस्तात् संश्लेषविशेषः कथितः। उपसंहारस्पर्शनयोः शब्दशक्त्या विशेष एव विदुषा(१) विज्ञेयः। 'तु'शब्दः स्वरनिवृत्त्यर्थः। अथवा अनुस्वारस्वरभक्त्योर्व्यञ्जनवत् (२) स्पर्शमात्रनिवर्त्तकः (३) इति माहिषेयभाषितम् ॥

## येन स्पर्शयति तत् करणम् ॥ ३४ ॥

सान्निध्यादन्येषामिति लभ्यते। स्वरेभ्योन्येषां वर्णानां 'तत् करणं,' भवति, अध्येता 'येन,' व्यञ्जनानि 'स्पर्शयति' प्रापयति स्थानम्(४) ॥

## हनुमूले जिह्वामूलेन कवर्गं स्पर्शयति ॥ ३५ ॥

'कवर्गे,' उच्चार्य्यमाणे 'जिह्वामूलेन,' वर्णं 'हनुमूले' 'स्पर्श-

---

१ उपसंहारस्पर्शशब्दशक्त्या स्थानविशेष एवेति क, चिह्नितपुस्तकपाठः। उपसंहारस्पर्शनयोः शब्दशक्त्या विशेषो विदुषा इति इ० मु० पुस्तकपाठः, ख, चिह्नितपुस्तकपाठश्च।

२ अनुस्वारभक्त्योर्व्यञ्जनत्वादिति ख, चिह्नितपुस्तकपाठः।

३ स्पर्शनमात्रत्वनिवर्तक इति ख, चिह्नितपुस्तकपाठः। स्पर्शनमात्रकत्वनिवर्त्तक इति इ० मु० पुस्तकपाठः।

४ प्रापयति तत् करणमिति ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च। प्रापयति तत् स्थानमिति ख, चिह्नितपुस्तकपाठः।

यति' प्रापयेदित्यर्थः। हन्वोर्मूलं, हनुमूलं, तस्मिन्। मूल इति जात्यपेक्षायामेकवचनम्(१)॥

## तालौ जिह्वामध्येन चवर्गे॥३६॥

'चवर्गे,' कार्य्ये, 'जिह्वामध्येन,' वर्णान् 'तालौ,' स्पर्शयेत्॥

## जिह्वाग्रेण प्रतिवेष्ट्य मूर्द्धनि टवर्गे॥३७॥

'टवर्गे,' कार्य्ये, 'जिह्वाग्रेण,' वर्णं 'मूर्द्धनि,' स्पर्शयेत्। किं कृत्वा, योग्यत्वात् जिह्वाग्रं,(२) 'प्रतिवेष्ट्य' आवेष्ट्य। 'मूर्द्ध'-शब्देन वक्त्रविवरोपरिभागो विवक्ष्यते॥

## जिह्वाग्रेण तवर्गे दन्तमूलेषु॥३८॥

'तवर्गे,' कार्य्ये, 'जिह्वाग्रेण,' वर्णान् 'दन्तमूलेषु,' स्पर्शयेत्॥

## ओष्ठाभ्यां पवर्गे॥३९॥

'पवर्गे,' कार्य्ये, 'ओष्ठाभ्यां' अन्योन्यं स्पर्शयेत्। अत्रोत्तरोष्ठ-स्थानं उत्तरत्वसाम्यादेषां स्थानानामधरोष्ठः करणं॥

## तालौ जिह्वामध्यान्ताभ्यां यकारे॥४०॥

'यकारे,' कार्य्ये, 'जिह्वामध्यान्ताभ्यां,' 'तालौ,' स्पर्शयेत्। जिह्वायाः मध्यं, तस्य अन्तौ, ताभ्यां, जिह्वामध्यान्ताभ्यां॥

---

१ तस्मिन्, मूलमिति जात्यपेक्षमेकवचनमिति ग, चिह्नितपुस्तकपाठः। तस्मिन्। जात्यपेक्षयामेकवचनमिति इ० मु० पुस्तकपाठः।

२ योग्यत्वात्तज्जिह्वाग्रमिति ख, ग, चिह्नितपुस्तकपाठः।

## रेफे जिह्वाग्रमध्येन प्रत्यग् दन्तमूलेभ्यः ॥ ४१ ॥

'रेफे,' कार्य्ये, 'जिह्वाग्रमध्येन,' 'दन्तमूलेभ्यः,' 'प्रत्यक्,' स्पर्शयेत्। 'प्रत्यक्' इति अभ्यन्तर उपरिभागे (१), इत्यर्थः। यथा, प्रत्यगात्मेत्यन्तरात्मा(२) प्रतीयते ॥

## दन्तमूलेषु च लकारे ॥ ४२ ॥

'च'कारो जिह्वाग्रमध्यं प्रत्यक्त्वञ्चाकर्षति(३)। 'लकारे,' कार्य्ये, जिह्वाग्रमध्येन 'दन्तमूलेषु,' प्रत्यक् स्पर्शयेत्। अयमर्थः, लकारस्य दन्तमूलप्रत्यासन्नप्रत्यक्प्रदेशस्थानमिति(४) विज्ञेयं ॥

## ओष्ठान्ताभ्यां दन्तैर्वकारे ॥ ४३ ॥

'वकारे,' कार्य्ये, अधरोष्ठान्ताभ्याम् 'उत्तरदन्ताग्रैः(५),' सह स्पर्शयेत्। 'दन्तैः' इतिस्थाननिर्देशः। 'ओष्ठान्ताभ्याम्' इति करणनिर्देशः ॥

## स्पर्शस्थानेषूष्माण आनुपूर्व्येण ॥ ४४ ॥

'ऊष्माणः' 'आनुपूर्व्येण' यथाक्रमेण, 'स्पर्शस्थानेषु,' उच्चारणीया भवन्ति। यथा, जिह्वामूलीयः, कवर्गस्थाने। यः काम-

---

१ अभ्यन्तरमुपरिभागे इति क, ग, चिह्नितपुस्तकपाठः।

२ प्रत्यगात्मेत्यभ्यन्तरात्मेति क, चिह्नितपुस्तकपाठः।

३ प्रत्यक्त्वमन्वादिशतीति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

४ दन्तमूलप्रत्यासन्नप्रत्यगक्षरप्रदेशस्थानमितीति ख, चिह्नितपुस्तकपाठः। इ० मु० पुस्तकपाठश्च। दन्तमूलप्रत्यासन्नप्रदेशस्थानमितीति क, चिह्नितपुस्तकपाठः।

५ उपरि दन्ताग्रेणेति क, चिह्नितपुस्तकपाठः।

येत। शकारः, चवर्गस्थाने। मधुश्च माधवश्च। षकारः, टवर्गस्थाने। अष्टाभ्यः स्वाहा (१)। सकारः, तवर्गस्थाने। स्तना उपरवाः (२)। उपध्मानीयः, पवर्गस्थाने। यः पाप्मना इत्यानुपूर्व्येण विज्ञेयं (३)। आनुपूर्व्यनियमात् पञ्चसूष्मसु उक्तेषु हकारोऽवशिष्टः। तस्य विधिमुपरिष्टादाचष्टे ॥

## करणमध्यन्तु विवृतं ॥ ४५ ॥

तेषामूष्मणां 'करणमध्यन्तु,' 'विवृतं,' भवति। स्पर्शानां करणसाधर्म्यनिवृत्तिपरः(४) 'तु'शब्दः। करणानां मध्यं, करणमध्यं ॥

## कण्ठस्थानौ हकारविसर्जनीयौ ॥ ४६ ॥

'हकारविसर्जनीयौ,' 'कण्ठस्थानौ', भवतः(५)। कण्ठः, स्थानं ययोस्तौ, तथोक्तौ (६)। अनयोः करणाभावः। अहरहर्विधानिनां ॥

## उदयस्वरादिसस्थानो हकार एकेषां ॥ ४७ ॥

'एकेषां', मते, 'हकारः', 'उदयस्वरादिसस्थानः' आत्मन उपरि स्वरादिसस्थानः, भवति, इति वाररुचोक्तं। स्यादेतत्।

---

१ अष्टावष्टाविति ग, चिह्नितपुस्तकपाठः।

२ अग्निस्ते इति ग, चिह्नितपुस्तके भिन्नपाठः।

३ आत्मपूर्व्येण, आत्मपूर्व्या विज्ञेयाः इति च इ० मु० पु० पाठः।

४ करणसाम्यनिवृत्तिकर इति क, चिह्नितपुस्तकपाठः। करणसाम्यनिवृत्तिपर इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

५ कण्ठस्थानौ स्थानामिति ख, ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

६ ययोस्तौ कण्ठस्थानाविति ग, चिह्नितपुस्तकपाठः।

आदिना सस्थान इत्युक्ते शेषस्य स्थानान्तरं (१) वक्तव्यं। तदप्यकार इकार उकारे (२) नास्ति। तथा सति स्वरस्य आदित एकमेवस्थानमिति, (३) आदिशब्दवैयर्थ्यं स्यात्। स्वरसस्थान इत्येतावतैव सिद्धेरिति(४)। मैवं। सन्ध्यक्षरेषु शेषस्य स्थानान्तरोपपत्तेः। इकारोऽध्यर्द्ध इति सूत्रद्वयेन शेषभूतवर्णव्यक्तौ(५) तयो स्थानान्तरमपि सिद्धमेव(६)। एवमैकारौकारयोरपि व्याकरणे शेषस्य स्थानान्तरं विहितं विज्ञेयं। सन्ध्यक्षरत्वाविशेषादनयोः (७)। नन्वेवमप्यकुहविसर्जनीयानां कण्ठ इति सन्ध्यक्षरादावकारस्यापि कण्ठस्थानत्वात्तेन सस्थानत्वे कथ्यमाने (८) पूर्व्वसूत्रोक्तेन पौनरुक्त्यमस्य सूत्रस्य स्यात्। मैवं मंस्थाः। एकारौकारयोरादिवर्त्तिनः(९) अकारस्य केवलस्य च विशेषोऽस्ति। केवलस्य करणम्, ओष्ठहनु, नातिव्यस्तं, नात्युपसंहृतञ्च। सन्ध्यक्षरादौ वर्त्तमानस्य तु संवृतकरणतरं (१०)। तस्मात् स्थानकरणयोः सहचरितत्वादादिसस्थान-

---

१ स्थानान्तरत्वमिति इ० मु० पुस्तकपाठः।

२ तदप्यकारेकारौकारेषु इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

३ स्वरस्यैकमेव स्थानमिति इति क, ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

४ इत्येतावतैवार्थसिद्धेरिति इति इ० मु० पुस्तकपाठः।

५ सूत्रद्वयेन एकारौकारयोः शेषभूतवर्णव्यक्तौ इति ग, चिह्नितपुस्तकपाठः।

६ प्रसिद्धमेवेति ख, ग, चिह्नितपुस्तकपाठः।

७ सन्ध्यक्षरत्वादविशेषादनयोरिति क, चिह्नितपुस्तकपाठः।

८ तेन समानस्थानत्वे कथ्यमाने इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

९ एकारौकारादिवर्त्तिन इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च। ओकारैकारयोरादिवर्त्तिन इति ग, चिह्नितपुस्तकपाठः।

१० संवृतकरणमिति ग, चिह्नितपुस्तकपाठः।

इत्युक्ते आदिसमानस्थानकरण इति विज्ञेयं। किञ्च पूर्व्वसूत्रे करणाभाव उक्तः। अत्र तु करणवत्वमपि विद्यत इति मतान्तरमुपपद्यते, न पौनरुक्त्यञ्च। यथा, तिग्महेते। यावतीर्वांसामहे। अग्निहोत्रं जुहोति। सम्प्रयतीरहौ(१)। 'उदय'-शब्दः, उत्तरपर्य्यायः। उदयश्चासौ स्वरश्च, तस्य आदिः, तेन सस्थानः, उदयस्वरादिसस्थानः (२)॥

## पूर्वान्तसस्थानो विसर्जनीयः॥ ४८॥

'विसर्जनीयः', आत्मनः पूर्व्वस्वरान्तेन 'सस्थानः' समानस्थानकरणः, भवति। अत्रापि पूर्व्वस्वरान्त इति(३) सन्ध्यक्षरमुच्यते। स्वरान्तस्य भिन्नस्थानान्तरत्वाभावात् (४)। यथा, अग्नेः। ब्राह्मणैरायुष्मत्। बाहुवोर्बलं। आयज्ञोः। पूर्व्वस्य, अन्तः, तेन, सस्थानः, पूर्व्वान्तसस्थानः॥

## नासिक्या नासिकास्थानाः॥४९॥

'नासिक्याः' यमाः, 'नासिकास्थानाः', भवन्ति। यथा, रुक्मं। याच्ञा। आह्लारः। रत्नमभजन्त। पाप्मानं॥

---

१ सम्प्रयतीरह्वाविति ख, चिह्नितपुस्तकपाठः।

२ उदयस्वरादिसस्थानः, उदयश्चासौ स्वरश्च, तस्य चादिः, तेन, सस्थानः, उदयस्वरादिसस्थान इति क, चिह्नितपुस्तकपाठः। उदयश्चासौ स्वरश्च तस्य चादिः, तेन सस्थान इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

३ पूर्वस्वर इति ख, ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

४ स्वरान्तरस्य हि स्थानान्तरत्वाभावात् इति ख, चिह्नितपुस्तकपाठः।

**मुखनासिक्या वा ॥ ५० ॥**

त एव नासिक्याः 'मुखनासिकाभ्यां वा उच्चारणीयाः[१] भवन्ति। उक्तान्येवोदाहरणानि। मुखञ्च, नासिका च, मुखनासिके। तत्सम्बन्धिनः, 'मुखनासिक्याः'॥

**वर्गवच्चैषु ॥ ५१ ॥**

सिंहावलोकनेन [२] वर्गस्योक्तं करणं 'च'कारोऽनुकर्षति। 'एषु' नासिक्येषु, 'वर्गवत्', करणं भवति। वर्गस्येव वर्गवत्॥

**नासिकाविवरणादानुनासिक्यं, नासिकाविवरणादानुनसिक्यम् ॥ ५२ ॥**

'नासिकाविवरणात्' घ्राणविलात्, 'आनुनासिक्यं' रागादि कर्त्तव्यं। यथा सुश्लोकां३ सुमङ्गलां३ इत्यादि[३]॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वितीयोऽध्यायः ॥२॥

---

अथ तृतियोध्यायः।

**अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः ॥ १ ॥**

'अथ' इत्ययमधिकारः। 'आदौ' पदादौ, 'उत्तरे' पदान्ते च, वर्त्तमानः संहितायां यो दीर्घः, असौ, 'विभागे' पदविभागसमये, 'व्यञ्जनपरः,' 'ह्रस्वं,' आपद्यते। व्यञ्जनपरत्वमत्र यथासंहितास्थं

---

१ मुखनासिकाभ्यामुच्चारणीया इति क, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च। मुखेन नासिकाभ्याञ्च उच्चारणीया इति इ० मु० चिह्नितपुस्तकोद्धृतपाठान्तरम्। मुखनासिकाभ्याञ्चोच्चारणीया इति ग, चिह्नितपुस्तकपाठः।

२ सिंहावलोकनन्यायेन इति ग, चिह्नितपुस्तकपाठः।

३ सुश्लोकां सुमङ्गलमित्यादीनि क, चिह्नितपुस्तकपाठः।

विज्ञेयं। ननु, दीर्घः कथं लभ्यते, ह्रस्वानन्तरभावित्वात्, देवाश्वीकादिग्रहणेषु प्लुतादर्शनाच्चेति ब्रूमः। संहितायामित्यस्यायमर्थः, कार्य्यभाजः पदस्य उत्तरपदेन सह सम्बन्धः,(१) न तु पूर्व्वपदेन सह सम्बन्धनियमः। 'विभागः', अत्र प्रकृतिपदैरुच्यते। प्रकृतिर्नाम यथापाठः। प्रकृतिपदैरिति किं। श्यामयो भुव इत्यत्र जटायां श्यशब्दस्य द्वितीयोच्चारणेपि दीर्घः प्रसज्येत। उत्तरपदेन विभागाभावात् स माभूदिति(२) परिहारः। विभागशब्दस्य(३) अयमर्थः, पदादौ दीर्घस्य पूर्व्वपदेन विभागः, पदान्ते दीर्घस्य उत्तरपदेन विभागः। विभागे व्यञ्जनपर इति किं। ऋतधामासीत्यत्र (४) माभूदिति। नाधामा धारयेदितिप्राप्तिः(५)। संहितायां यो दीर्घ इति किं (६)। एष वो भरता राजेत्यत्र(७) प्राप्तिसम्पादनार्थं। तथा सति भरता याज्यास्विति (८) याज्यापदं सार्थकं। नान्यथा। व्यञ्जनमस्मात् परः, इति व्यञ्जनपरः॥

---

१ सबन्धनियम इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

२ तन्माभूदितीति ग, चिह्नितपुस्तकपाठः।

३ विभागपदस्येति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

४ ऋतधामा इत्यत्रेति ग, चिह्नितपुस्तकपाठः।

५ धामा धारयेति प्राप्तिरिति ख, ग, चिह्नितपुस्तकपाठः।

६ संहितायां दीर्घ इतीति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

७ भरता राजे त्यत्रेति ख, चिह्नितपुस्तकपाठः।

८ याज्यास्वितीति क, चिह्नितपुस्तकपाठः।

ऊर्ज्जे त्वा वायवः (१) इत्यादावेतल्लक्षणसम्भवादतिव्याप्ति-मुत्तरसूत्रैः परिहरति।

**देवाशीकासुम्नाश्वर्त्तावयुनाहृदयाघोक्थाशुद्धा ॥ २ ॥**

देवा शीका सुम्ना श्वा ऋता वयुना हृदया अघा उक्था शुद्धा इत्येतेष्ववग्रहेष्वन्त्यस्वरः (२) विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, देवायते यजमानाय। शीकायते स्वाहा। सुम्नायन्तो हवामहे। द्यावापृथिव्या श्वावित्। अप्यकारादितिवचनादिदमप्युदाहर्त्तव्यम्। अश्वावतीꣳ सोमवतीं। ऋतायवः पुरान्नमचन् (३) वयुनाविदेकः (४)। हृदयाविधश्चित्। अघायवो मा गन्धर्व्वो विश्वावसुराद्यत्। उक्था मदानां धेनुः। आपो देवीः शुद्धा युवः॥

**इन्द्रा वदन्वान्परः ॥ ३ ॥**

'इन्द्रा' इत्येतस्मिन् अवग्रहे सति, अन्त्यस्वरः, वत्, वन्, वान्, इत्येवम्परो विभागे ह्रस्वमापद्यते। यथा, इन्द्रावतीमपचितीं। इन्द्रावन्तो मरुतः। इन्द्रावान् स्वाहा। इन्द्रेति किं। ऊर्णावन्तं प्रथमः (५)। प्रजावान् (६)। प्रजावतीरनमीवा अयक्ष्माः। एवं पर इति किं। इन्द्रावरुणयोरहं॥

---

१ त्वा वायव इति ख, ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

२ इत्येतेषु ग्रहणेष्ववग्रहेष्वन्त्यस्वर इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च। एतेष्वन्त्यस्वरोवग्रहेषु इति ग, चिह्नितपुस्तकपाठः।

३ ऋतायवः पुरान्नं भचन्निति ख, चिह्नितपुस्तकपाठः। ऋतायवः पुरान्नमिति ग, चिह्नितपुस्तकपाठः।

४ वयुनाविदेक इदिति ख, चिह्नितपुस्तकपाठः।

५ प्रथमः सिदयोनीमिति ख, चिह्नितपुस्तकपाठः।

६ असुरप्रजावान् इति ख, चिह्नितपुस्तकपाठः।

चित्रा वपरः ॥ ४ ॥

'चित्रा' 'इत्येतस्मिन्नवग्रहे, अन्तस्वरो वकारपरः, विभागे ह्रस्वमापद्यते । यथा, चित्रावसोः स्वस्ति ते पारमशीय । चित्रेतिकिं । मित्रावरुणाविव । वपर इति किं । चित्रापौर्णमासे(१) दीक्षेरन् ॥

प्रस्थेन्द्रियाद्रविणाविश्वदेव्यादीर्घावीर्य्याविश्वावातात्वाभङ्गुराकर्णकावृष्णियासुगोपर्कसामाघासत्रावर्षापुष्यामेघाप्रास्वा ॥ ५ ॥

प्रस्था इन्द्रिया द्रविणा विश्वदेव्या दीर्घा वीर्य्या विश्वा वाता त्वा भङ्गुरा कर्णका वृष्णिया सुगोपा ऋक्सामा अघा सत्रा वर्षा पुष्या मेघा प्रा स्वा एतेष्ववग्रहेषु(२) अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा, प्रस्थावद्रथवाहनं । इन्द्रियावते पुरोडाशम् । द्रविणावतः कुरुते । विश्वदेव्यावते स्वाहाः । दीर्घा धियो रक्षमाणाः । वीर्य्यावन्तमभिमातिषाहम् । विश्वामित्रस्य सूक्तम् । वातावद्वर्षन् । त्वावतो मघोनः । भेत्तारं भङ्गुरावतः । कर्णकावत्येतया (३) । वृष्णियावतस्तव । सुगोपातमो जनः (४) । ऋक्सामाभ्यां यजुषाम् । अघाश्वा देवैनम् । सत्राजितं धनजितं ।

---

१ चित्रापूर्णमासे इति ख, ग, चिह्नितपुस्तकपाठः ।

२ इत्येतेष्ववग्रहेष्विति ख, चिह्नितपुस्तकपाठः इ० भु० पुस्तकपाठश्च ।

३ भूमौ कर्णकावत्येतयेति क, चिह्नितपुस्तकपाठः ।

४ स सुगोपातमो जन इति ग, चिह्नितपुस्तकपाठः ।

वर्षाह्वां जुहोति। पुष्पावतीः सुपिप्पलाः। मेघायते स्वाहा। प्रावणेभिः सजोषसः। स्वाधियञ्जनयत् सूदयच्च॥

## लोक एवेष्टा॥ ६॥

'लोके' 'एव' इत्येवम्पूर्वे 'इष्टा' इत्येतस्मिन् अवग्रहे (१) अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, सममुष्मिं-ल्लोक इष्टापूर्त्तेन(२)। स लोवेष्टापूर्त्ती। एवम्पूर्वं इति किं। एनम् इष्टापूर्त्ते सᳬ सृजेथाम् (३)। इष्टेति किं। साक्षादेव प्रजापतये॥

## शक्तीरथीत्विषीवाशीरात्र्योषध्याहुतीव्याहृतीस्वाहाकृती-ह्रादुनीशचीचितीश्रोणीपृष्ठीपूत्यभीचर्षणीपर्य्यधीपारीशत्रू-विषूवसूअनूहनूसूविभू इत्यवग्रहः॥ ७॥

शक्ती रथी त्विषी वाशी रात्री ओषधी आहुती व्याहृती स्वाहा कृती ह्रादुनी शची चिती श्रोणी पृष्ठी पूती अभी चर्षणी परी अधी पारी शत्रू विषू वसू अनू हनू सू विभू इत्येते-ष्ववग्रहेषु, अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, शक्तीवन्तो गभीराः। रथीतमौ रथीनां। त्विषीमते पथीनां(४)। वाशीमन्त इष्मिणः (५)। रात्रीभिरसुम्नन्।

१ इत्येतस्मिन्नवग्रहणे इति क, चिह्नितपुस्तकपाठः इत्यस्मिन् ग्रहणे इति इ० मु० पुस्तकपाठः।

२ सममुष्मिं ल्लोक इष्टापूर्त्तेन गच्छते इति ख, चिह्नितपुस्तकपाठः। लोक इष्टा-पूर्त्तेनेति ग, चिह्नितपुस्तकपाठः।

३ एनमिष्टापूर्त्ते संरभेथामिति ग, चिह्नितपुस्तकपाठः।

४ सम्पिञ्जराय त्विषीमते इति ख, चिह्नितपुस्तकपाठः।

५ ते वाशीवामन्त इष्मिण इति क, चिह्नितपुस्तकपाठः।

मोषधीभ्यो वेहतं। आहुतीभिरनूयाजेषु। एताभिर्व्याहृतीभिः प्रजापतिः। स्वाहा कृतीभ्यः प्रेष्य इत्याह। कुहूनीभ्यः स्वाहा। चष्टे शचीभिः। चितीभ्यामुपायन्। श्रोणीभ्याᳪस्वाहा। पृष्टीभ्यः स्वाहा। पूतीगन्धस्यापहत्यै। अभीवृतो घृणीवान्। मित्रस्य चर्षणी धृतः। वीरवन्तं परीणसं। अधीवासं या हिरण्यानि। पारीणह्यस्येशे। मन्नूयतो हन्ता। विषूवान् विषूवन्तः (१)। अरमतिर्वसूयुः। अनूराधा नक्षत्रं। अनकारादि चेति(२) वचनादननूयाजं प्रापणीयमित्येतदप्युदाहरणं (३) भवति। हनूभ्याᳪ स्वाहा। सूयवसिनी मनवे। विभू दावने (४)। 'इत्यवग्रहः' 'इति' अनेन प्रकारेण उक्तः पदसमुदायः, 'अवग्रहः', विज्ञेयः॥

**अवा-सचस्वा-नुदा-मृडा-वर्द्धा-शिक्षा-रक्षा-ऽद्या-भवा-भजा-यत्राचरा-पिबा-ना-धामा--धारया-धर्षाघा--वर्द्धया-बोधात्रा-तत्रामुञ्चाश्वस्या-पृणस्वा-हिष्ठा-त्वन्तरा--जनिष्ठा-युक्ष्वाच्छा ॥८॥**

अवा सचस्वा नुदा मृडा वर्द्धा शिक्षा रक्षा अद्या भवा भजा यत्रा चरा पिबा ना धामा धारया धर्षा अघा वर्द्धया बोधा अत्रा तत्रा मुञ्चा अश्वस्या पृणस्वा हिष्ठा त्वन्तरा जनिष्ठा युक्ष्वा अच्छा इत्येतेष्वनवग्रहेषु (५) अन्त्यस्वरो विभागे व्यञ्जन-

१ विषूवन्तो भवन्ति इति ख, चिह्नितपुस्तकपाठः।

२ अनकारादितीति ग, चिह्नितपुस्तकपाठः।

३ प्रापणीयमप्येतदुदाहरणमिति ग, चिह्नितपुस्तकपाठः।

४ विभू दावन्ने इति ग, चिह्नितपुस्तकपाठः।

५ एतेष्वनवग्रहेषु इति ग, चिह्नितपुस्तकपाठः।

परो ह्रस्वमापद्यते। यथा, अवा नो देव्या कृपा। सचस्वा नः स्वस्तये। प्रणुदा नः सपत्नान्। मृडा जनित्रे रुद्र (१)। वर्द्धा नो अमवच्छ्रवः। शिक्षा नो अस्मिन्। रक्षा च नो अधि (२)। अद्या देवान् जुष्टतमः। भवा पायुर्विशो अस्याः। व्रजे भजा त्वन्नः। यत्रा नरो मरुतः। प्रचरा सोम दुर्य्यां। पिवा सोममिन्द्रमन्दतु त्वा। रिपवो ना ह देभुः। अपि विकृतम्, अप्यकारात्, इति वचनाभ्यां (३) प्रणवा अᳪशव इत्यत्र ह्रस्वादेशः किं न स्यात्। मैवं। अपि विकृतमिति वचनं कण्ठोक्तपदविषयम्, न त्वकारादिपदविषयम्। प्राणा इत्यस्यापि (४) अकारादित्वान्नायं विधिः। तर्हि वैकृतत्वाभावादना इत्यनोङ्ग्यांशस्य किं न स्यादयं विधिः। एवं रूपस्य संहितायां दीर्घाभावात्। धामा ह यत् ते अजर॥ वृहस्पते धारया वसूनि। धर्षा मानुषा नञ्चः। उतवाघा स्यालात्। तमग्ने वर्द्धया त्वम्। बोधा नो अस्य वचसो यविष्टा। अत्रा ते रूपम्(५)। तत्रारथमुप(६)। प्रमुञ्चा स्वस्तये। एकस्त्वष्टुरश्वस्या विशस्ता(७)। समयोनीरापृणस्वा घृतेन। आपो हिष्ठा

१ मृडा नो रुद्रोत नो मय इति ख, चिह्नितपुस्तकपाठः। मृडा जरित्रे इति ग, चिह्नितपुस्तकपाठः।

२ रक्षा च नो अधि च देवब्रूहि इति ख, चिह्नितपुस्तकपाठः।

३ इति द्वाभ्यां वचनाभ्यामिति इ० मु० पुस्तकपाठः।

४ प्राणा वा इत्यस्यापीति ग, चिह्नितपुस्तकपाठः।

५ अत्रा ते रूपमुत्तममिति ख, चिह्नितपुस्तकपाठः।

६ तत्रा रथमुपशग्मं सदेमेति ख, चिह्नितपुस्तकपाठः।

७ अश्वस्या विशस्तेति ग, चिह्नितपुस्तकपाठः।

मयोभुवः(१)। हि इति किं(२)। प्रतिष्ठा वा एकविꣳशः। अग्ने त्वन्तरा मृधः। त्वमिति किं। अन्तरतरा तमव्रतो भवति। जनिष्ठा हि जेन्यः। युक्ष्वा हि देवहूतमान्। अच्छा नक्षि द्युमत्तः(३)।

## अधाग्नियाज्ये ॥ ९ ॥

अग्निश्च याज्या च 'अग्नियाज्यं', तस्मिन्। चार्थे द्वन्द्व इति समासः। 'अग्निः' इत्यग्निप्रकाशकमन्त्रा इत्युच्यन्ते(४)। चतुर्थकाण्ड इत्यर्थः। उभावामिन्द्राग्नीप्रभृत्यग्निर्वृत्राणिपर्य्यन्ताः प्रश्नोत्तमानुवाका याज्यासञ्ज्ञका(५) भवन्ति, युक्ष्वा हीत्यनुवाकश्च। अत्र विषये 'अधा' इत्येतस्मिन् ग्रहणे अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, अध ह्यग्ने क्रतोः। अध च नः शर्म यच्छ। अध ते सुम्नमीमहे। अध यथा नः। अग्नियाज्ये इति किं। अधा मेति तद्धितिष्ठावे॥

## कृत्वा-दक्षिणेना-स्वेना-घ्नन्तना-जगामा-रुहेमा-विद्मधामा-चक्रमा-क्षामा-स्तरीमा-भरेमा-वर्षयथेरयथारिथा-पाथाथा-सिञ्चथा-जनयथा-जयतोश्वतावता-याता-शृणुता-कृणुता-बिभृता॥ १०॥

---

१ मयोभुवो भुव इति क, चिह्नितपुस्तकपाठः।

२ हिष्ठेति किमिति ग, चिह्नितपुस्तकपाठः।

३ द्युमत्तम इति ख, चिह्नितपुस्तकपाठः।

४ मन्त्रा लक्ष्यन्ते इति ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च। मन्त्रा लभ्यन्ते इति ख, चिह्नितपुस्तकपाठः।

५ याज्यासञ्ज्ञा इति ख, ग, चिह्नितपुस्तकपाठः।

कृत्वा दक्षिणेना स्वेना हन्तना जगामा रुहेमा विद्मा ऋध्यामा चक्रमा चामा स्तरीमा भरेमा वर्षयथा ईरयथा आरिथा पाथा अथा सिञ्चथा जनयथा जयता उच्चता अवता याता शृणुता कृणुता बिभृता एतेष्वनवग्रहेषु(१) अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, कृत्वाचिद्यस्य स मृतौ। दक्षिणेना वसूनि। स्वेना हि वृत्रꣳशवसा। तपसा हन्तना तं। आजगामा परस्याः। अस्रवन्ती मा रुहेमा स्वस्तये। विद्मा ते अग्ने। ऋध्यामा त ओहैः। चक्रमा कच्चनागः। चामा रेरिहद्वीरुधः समञ्जन्। सुष्टरीमा जुषाणा। अꣳहो मुचे प्रभरमा-मनीषां। वृष्टिं वर्षयथा पुरीषिणः। उदीरयथा मरुतः। उदारिथा यजतम्। चये पाथा दिवो विमहसः। अथा सोमस्य(२)। यत्रा नरो मरुतः सिञ्चथा मधु। आपो जनयथा च नः। उप प्रेत जयता नर स्थिराः। घृतमुच्चता मधुवर्णम्(३)। अस्मानु देवा अवता हवेषु॥ देवा रथैर्याता हिरण्ययैः। मरुतः शृणुता हवं। संवत्सराय कृणुता बृहन्नमः। पुत्रं बिभृता स्वेनम्॥

## भरता याज्यासु॥ ११॥

'भरता' इत्येतस्मिन् ग्रहणे अन्त्यस्वरो 'याज्या'विषये विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, धिया भरता जातवेदसं। भर-

---

१ इत्येतेष्वनवग्रहेषु इति ख, चिह्नितपुस्तकपाठः। इ० मु० पुस्तकपाठश्च। एतेषु इति ग, चिह्नितपुस्तकपाठः।

२ अथा सोमस्य प्रयती युवाभ्यामिति ख, चिह्नितपुस्तकपाठः।

३ उच्चतामधुवर्णमच ते इति ग, चिह्नितपुस्तकपाठः।

ता वसुवित्तमं। वचोग्नये[१] भरता बृहत्। याज्यास्थिति किं। एष वो भरता राजा॥

**अत्ता-भवता-नदता-तरतातपता-जुहुता-वोचता-मुञ्चता-चृता-घुष्या-जनया-वर्त्तया-सादया-पारया-दीया-हरा-भरापा-ससादा-सृजा-तिष्ठा-येना॥ १२॥**

अत्ता भवता अनदता तरता तपता जुहुता वोचता मुञ्चता चृता घुथा जनया वर्त्तया सादया पारया दीया हरा भरा अपा ससादा सृजा तिष्ठा येना एतेषु[२] अनवग्रहेष्वन्त्य-स्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, अत्ता हवीꣳषि। आदित्यासो भवता मृडयन्तः। अहावनदता हते। सु वो रुद्रा-मास्तरता रजाꣳसि। तपता सुवृक्तिभिः। पित्रे जुहुता विश्वक-र्म्मणे। विश्वेदेवासो अधिवोचता मे। पदिषितामुञ्चता यजत्रा। अयस्मयं विचृता बन्धमेतं। परुष्परुरनुघुथा विशस्ता। मनुर्भव जनया दैव्यं[३]। ताभिरावर्त्तया पुनः। सादया यज्ञं[४]। अग्ने त्वं पारया नव्यः। बृहस्पते परिदीया रथेन। निहार-मिन्निमे हरा निहारं। मा नो मर्षीराभरादद्ब्वि। वाजꣳ स्त्वा

१ नमोग्नये इति ग, चिह्नितपुस्तकपाठः। पूर्ब्वं वचोग्नये इति ख, चिह्नितपुस्तक-पाठः।

२ इत्येतेषु इति ख, चिह्नितपुस्तकपाठः।

३ जनया दैव्यं जनमिति ख, ग, चिह्नितपुस्तकपाठः।

४ यज्ञं सुकृतस्येति ख, चिह्नितपुस्तकपाठः।

अपाहधि (१)। अग्निर्होता निषसादा यजीयान्। सृजा वृष्टिं दिवः। तिष्ठा देवो न सविता। येना सहस्रं वहसि॥

### उश्मसी-क्रयी-क्षधी-श्रुधी-यदी॥ १३॥

उश्मसी क्रयी क्षधी शुधी यदी इत्येतेषु ग्रहणेषु(२) अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, उश्मसी गमध्ये। रुद्र यत्ते क्रयी परं। क्षधी स्वस्मान् अदितिः। इमं मे वरुण श्रुधी हवं। यदी भूमिं जनयन् विश्वकर्म्मा॥

### सू-तू-नू-मिथू-मक्षू-ऊ॥१४॥

सू तू नू मिथू मक्षू ऊ इत्येतेषु ग्रहणेषु (३) अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा, मोषूण इन्द्र। आतू न उपगन्त न। तस्य नूरण आ(४)। पात्राण्यसिना(५) मिथूकः। मक्षू देववती रथः। अस्माभिरूनु प्रतिचक्ष्याभूत्(६)।

### व्युत्पूर्व्व आननुदात्तोनूश्मवत्यनूश्मवति॥ १५॥

'वि' इत्येवम्पूर्व्व 'उत्' पूर्वो वा(७) 'आन्' इत्येष स्वरः 'अनुदात्तः',

१ श्रुत्वा अपाहधि इति ख, ग, चिह्नितपुस्तकपाठः।

२ इत्येतेष्वनवग्रहेषु इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

३ इत्येतेष्वनवग्रहेषु इतिख, चिह्नितपुस्तकपाठः इ० मु० पुस्तकपाठश्च। एतेषु इति, ग, चिह्नितपुस्तकपाठः।

४ एतमस्य नूरणे इति ख, चिह्नितपुस्तकपाठः।

५ गात्राण्य सिनेति ख, चिह्नितपुस्तकपाठः।

६ अस्माभिरूनु प्रतिचक्ष्याभूत् ऊर्द्ध ऊ षुण ऊतये इति ख, चिह्नितपुस्तकपाठः। अस्माभिरूनु उर्द्ध ऊषुण इति ग, चिह्नितपुस्तकपाठः।

७ वि उत्इत्येवम्पूर्व उत्पूर्वो वेति ख, चिह्नितपुस्तकपाठः।

'अनूष्मवति' ऊष्मरहिते पदे[१], वर्त्तमानो व्यञ्जनपरः पदादौ वर्त्तमानत्वादत्र पूर्व्वपदेन[२] विभागे सति ऋत्वमापद्यते। यथा, व्यानायेति वि अनाय। उदानायेत्युत् अनाय। एवम्पूर्व्व इति किं। यदानूचुस्तेन। पर्य्याणीयाह्वनीयस्य। नकारः किमर्थः। यद्रुक्मं व्याघारयति। उदादाय पृथिवीं जीरदानुः। अनुदात्त-इति किं। विश्वकर्म्मा व्यानट्। नेष्टः पत्नीमुदानय। अनूष्म-वतीति किं। मधोर्धारा व्यानशुः। उदानिषुर्महीरिति॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे तृतीयोऽध्यायः॥ ३॥

---

अथ चतुर्थोऽध्यायः।

## अथ प्रगृह्याः॥ १॥

'अथ'इत्ययमधिकारः। 'प्रगृह्याः', उच्यन्ते, इत्येतदधिकृतं विज्ञेयम् (३)॥

## नावग्रहः॥ २॥

'अवग्रहः,' प्रगृह्यो 'न', भवति॥

---

१ ऊष्मरहिते पदादौ इति क, चिह्नितपुस्तकपाठः।

२ वर्त्तमानत्वात् पूर्वपदेन इति ख, ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

३ अधिकृतं वेदितव्यम्, इतउत्तरं यद्वक्ष्याम इति ग, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

ओकारः सांहितोकारव्यञ्जनपरः, ओ नहिपरः द्वे इति वक्ष्यति। एतत् उद्दिश्य पुरस्तादपवादोऽनेन विधीयते। यथा, तनूनपादसुरः। अग्नो अधं यजमानं। अग्नीषोमौ मा। द्वे द्वे पुरोऽनुवाक्ये कुर्य्यात्। अवग्रह इति जात्यपेक्षायामेकवचनं॥

## अन्तः॥ ३॥

पदस्य 'अन्तः', प्रग्रहसञ्ज्ञो भवति। यथा, देवते सम्हद्यै। अत्राह, किम् अपदान्तोऽपि प्रग्रहः स्यात्। अत्रोच्यते, ऊकार-इत्यविशेषेण वक्ष्यति, ओकारोऽसांहितोकारव्यञ्जनपर इति, चीयत्प्रपर इति च। अपदान्तस्य ऊकारस्य ओकारस्य(१) चीशब्दस्य वा प्रग्रहत्वं माभूदिति(२)। ननु, सिद्धमेवैतत्। एतत्सूत्रशेषे(३) उत्तरसूत्रेऽपिशब्देनान्वादेशोऽन्त्यस्यैव कार्य्यस्य निर्व्वाहात्(४) नेति ब्रूमः। अनेकवर्णसमुदाये ह्यन्त्यत्वमुपपन्नं। अयं पुनरेकवर्णनिर्द्देशः। ऊकार इत्यादिवर्णस्य यौ विकारलोपौ तयोरेवान्वादेशः। अन्त्यस्येत्यनेन अन्त्यः प्रग्रह इत्युक्तम्। प्रग्रह-इति सञ्ज्ञामात्रं, न निमित्तं(५) निमित्ती वा। तस्मादत्रान्वादेशो न प्रसरति॥

## इतिपरोपि॥ ४॥

'अपि'शब्दः सिंहावलोकनेन अथादावुत्तरे विभागे इत्यत्र

---

१ ओकान्तस्येति क, चिह्नितपुस्तकपाठः।

२ चीशब्दस्य ग्रहणं मा भूदिति ख, चिह्नितपुस्तकपाठः।

३ एतत् सूत्रशेषभूते इति ख, चिह्नितपुस्तकपाठः, इ० मु० पुस्तकपाठश्च।

४ कार्य्यनिर्वाहात् इति ग, चिह्नितपुस्तकपाठः। इ० मु० पुस्तकपाठश्च।

५ न तु निमित्तमिति ख, चिह्नितपुस्तकपाठः। इ० मु० पुस्तकपाठश्च।

विभागपदमन्वादिशति। सोऽयं प्रग्रह्यो विभागे 'इतिपरोऽपि', भवति। यथा, देवते इति। उभे इति। 'इति' शब्दः, परः, यस्मात्, असौ, इतिपरः॥

## ऊकारः॥५॥

'ऊकारः', पदान्तः सर्वत्र प्रग्रह्यो भवति। पदसमये वर्त्तमानः। यथा, हनू वा एते। वासन्तिकावृतू। बाहू उपश्रुतं। पदसमये वर्त्तमान इति किं। सूतूनूमिथूमचूज इत्यादावपि स्यात्(१)।

## ओकारोऽसाᳫंहितोऽकारव्यञ्जनपरः॥६॥

'असाᳫंहितः', 'ओकारः', 'अकारपरः(२) 'व्यञ्जनपरो वा प्रग्रहः स्यात्। यथा, विद्माहि सूनो असि। विष्णो हव्यᳫं रक्षस्व। असाᳫंहित इति किं। सोऽब्रवीत्। एवम्पर इति किं। विष्णवे ह्येदम्। संहितानिमित्तः, सांहितः, न साᳫंहितः असाᳫंहितः। अकारस्य व्यञ्जनस्य अकारव्यञ्जने एते परे(३) यस्मात् सः तथोक्तः॥

## समह्वदथपितृपूर्व्वस्य॥७॥

पूर्व्वोक्तनिमित्ताभावेपि (४) कार्य्यविधानार्थमोकारं विशि-

१ इत्यादि इति ग०, इ० मु० च।

२ अकारपरो वेति ग०, इ० मु० च।

३ ने परे इति इ० मु०।

४ पूर्वोक्तपरनिमित्ताभावेपि इति ख०, ग०, इ० मु० च।

नष्टि। 'च'कार ओकारमन्वादिशति। 'स म ह द थ पित्', एवम् 'पूर्वः,' असांहित ओकारः, अकारव्यञ्जनाभ्यामन्यपरोऽपि प्रग्रहो भवति। यथा, सो एवैषैतस्य। माभेर्मारोमो एषाम्। उपहूतां३ हो। इन्द्रो इत्याह। तथो एवोत्तरे। पितो आविशस्व। एवम्पूर्व इति किं। शतक्रतवुद्दᳪशमिव। असाᳪंहित-इति किं। प्र सो अग्ने॥

## अथैकारैकारौ॥ ८॥

'अथ' इत्ययमधिकारः। 'एकारैकारौ', प्रग्रहत्वेन विशिष्येते[१], इति एतदधिकृतं वेदितव्यं॥

## अस्मे॥९॥

'अस्मे' इत्येतस्मिन् ग्रहणे, अन्त्यस्वरः प्रग्रहो भवति। यथा, अस्मे ते बन्धुः॥

## त्वे इत्यनिङ्ग्यान्तः॥१०॥

'इति'शब्दः पदग्रहणत्वं[२] द्योतयति। 'अनिङ्ग्यान्तः', 'त्वे' इत्येष शब्दः, प्रग्रहो भवति। यथा, त्वे क्रतुमपि। अनिङ्ग्यान्त-इति किं। अनागास्त्वे अदिति त्वे तुरासः। इङ्ग्यस्यान्तः इङ्ग्यान्तः, न इङ्ग्यान्तः अनिङ्ग्यान्तः॥

---

१ प्रग्रहत्वेन विधीयेते इति ख०, ग०, इ० मु० च।

२ इङ्ग्यग्रहणत्वमिति ग०, इ० मु० च।

देवते उभे भागधे ऊर्द्धे विशाखे शृङ्गे एने मेध्ये तृप्ते तृद्ये-कनीनिके पार्श्वे शिवे चोत्तमे एवोत्तरे शिप्रे रथन्तरे वत्सरस्य रूपे विरूपे विषुरूपे सदोहविर्द्धाने अधिषवणे अहोरात्रे-धृतव्रते स्तुतशस्त्रे ऋक्सामे अक्तो अर्पिते रैवते पूर्त्ते प्रत्ते-विधृते अनृते अच्छिद्रेबहुले पूर्व्वजे कृणुध्व॑ सदने ॥११॥

देवते उभे भागधे ऊर्द्धे विशाखे शृङ्गे एने मेध्ये तृप्ते तृद्ये कनीनिके पार्श्वे शिवे चोत्तमे एवोत्तरे शिप्रे रथन्तरे वत्सरस्य रूपे विरूपे विषुरूपे सदोहविर्द्धाने अधिषवणे अहोरात्रे धृतव्रते स्तुतशस्त्रे ऋक्सामे अक्तो अर्पिते रैवते पूर्त्ते प्रत्ते विधृते अनृते अच्छिद्रेबहुले पूर्व्वजे कृणुध्व॑सदने, एतानि पदानि प्रग्रह-सञ्ज्ञानि स्युः। यथा, देवते सम्भृत्य। उभे एव रसेनानक्ति। भागधे भागधा अस्मै। भागधे इति किं।(१) अग्न उद्धे। ऊर्द्धे समिधावादधाति। विशाखे नक्षत्रं। वीति किं। तस्मिन् सह-स्रशाखे इति शाखान्तरे। अन्तरा शृङ्गे। मेध्ये एवैने करोति। असंतृप्ते हि हनू। सन्तृद्ये धृत्यै। कनीनिके अग्निष्टोमौ यत्। पार्श्वे परः समानः। शिवे नो द्यावापृथिवी। विकीर्णौ चोत्तमे उपदधाति। चेति किं। सम्पाद्योत्तमे मासि। तथो एवोत्तरे निर्व्वपेत्। एवेति किं। नैति षोडश्युत्तरे। शिप्रे अवेपयः। यद्वृह-द्रथन्तरे अन्वर्ज्जयेयुः। संवत्सरस्य रूपे आप्नुवन्ति। विरूपे धापयेते। विषुरूपे अहनी। वत्सरस्य विश्विति किं। अरूचितं

१ भागे इति किमिति क०, ग०, द० मु० च।

इश आरूपे अन्नं। रूपशब्दस्य प्रतिविशेषणं ग्रहणं विस्पष्टार्थं(१) द्रष्टव्यं। सदो हविर्द्धाने एव सम्मिनोति। सद इति किं। उपरवा हविर्द्धाने खायन्ते। ननु, पदग्रहणेषु पदं गम्येतेति सामर्थ्यात् हविर्द्धाने इत्येकपदस्यैव कार्य्यसिद्धिः, सदःपदं व्यर्थं। मैवं। पदग्रहणे(२) स्थलान्तरे भिन्नरूपस्य सम्भावनायां विशेषणं सार्थकं(३)। भिन्नरूपत्वाभावे तु चोद्यमेवैतद्भवेत्(४)। ननु, तर्हि देवते इति पदग्रहणस्य स्थलान्तरे सोमदेवते मतिविद इत्यत्र च भिन्नरूपत्वात्(५) विशेषणेन भवितव्यं। तच्च नास्ति। उच्यते, देवते इत्यखण्डपदस्यैव कार्य्यं विशेषणं(६) न युज्यते। अखण्डविधानमिति कथं प्रतीयते। ते इत्यंशस्य(७) ते मा पातमित्यादिना पृथक्करणादिति ब्रूमः। मेवं(८)। हविर्द्धाने इत्यस्याखण्डत्वद्योतकं न किञ्चिदप्यस्ति(९), येन सदःपदं वैयर्थ्यमालम्बते(१०)। अधिषवणे जिह्वा चर्म्म(११)। अधोति किं। सवने सवनेऽभिगृह्णाति।

१ प्रतिविशेषणमुच्चारणं विस्पष्टार्थमिति ख०, ग०, इ० म० च।

२ पदग्रहणस्येति क०, ख० च।

३ सार्थकं भवति इति इ० म०।

४ चोद्यमेतद्भवेदिति ग०, इ० म० च। चोद्यमतदिति ख०।

५ मतिविद इति भिन्नरूपत्वादिति ख० मतिविद इत्यभिन्नरूपत्वादिति ग०।

६ कार्य्याविधानादत्र विशेषणमिति ख०, ग०, इ० म० च।

७ ते इत्यस्येति ग०, इ० म० च।

८ नैवमिति ख०, इ० मु० च।

९ सदो हविर्द्धाने इत्यखण्डत्वद्योतकं न किञ्चित्तथास्ति इति ग०।

१० सदःपदवैयर्थ्यमालम्बते इति इ० मु०। सदःपदवैयर्थ्यमापद्यते इति, सदःपदवैयर्थ्यमावलम्ब्यते इति, सदःपदवैयर्थ्यमालभ्यते इति च, इ० मु० धृतपाठः।

११ हनू अधिषवणे जिह्वे ति ग०।

अहोरात्रे प्राविशन्। अहरिति किं। अतिरात्रे पशुकामस्य। द्यावापृथिवी धृतव्रते अविन्ना(१)। धृतेति किं। यस्य व्रते पुष्टि-पतिः स्तुतशस्त्रेव एवैतेन दुहे। स्तुते इति किं। ऊर्द्ध्वशस्त्रे प्रतिष्ठिते, इति शाखान्तरे। ऋक्सामे वै(२)। ऋगिति किम्। ब्रह्मसामे इति शाखान्तरे(३)। घृतेनाक्ते(४)। भुवनेष्वर्पिते। शाक्वररैवते(५)। जाग्रत्स्वप्नेनमिष्टापूर्त्ते(६)। प्रत्ते कामं(७)। विधृते समानी(८)। वीतिकिम्। अग्निधृते इति (९) शाखा-न्तरे। सत्यानृते अवपश्यन्। अछिद्रे बहुले उभे। पूर्व्वजे पितरा। पूर्व्वेति किं। प्रथमजे इति शाखान्तरे। गीर्भिः कृणुध्वꣳसदने ऋतस्य। कृणुध्वमिति किं अपान्त्वा सदने सादयामि॥

अमी चक्षुषो कार्ष्णी देवता फल्गुनी मुष्टी धी नाभी-वपाश्रपणी अह्नी जन्मनी सुम्निनी सामनी वैष्णवी ऐन्द्री दर्वी द्यावापृथिवी॥१२॥

अमी चक्षुषो कार्ष्णी देवता फल्गुनी मुष्टी धी नाभी वपाश्रपणी

१ अविन्ना देवीति ख०, ग०।

२ ऋक्सामे वै देवेभ्य इति ख०, ग० च।

३ ब्रह्म मे प्रतिष्ठिते इति शाखान्तरे इति ग०।

४ घृतेनाक्ते वृषणमिति ग०। अक्तो वृषणं दधाथामिति ख०।

५ शक्वररैवते सामनीति ख०, ग० च।

६ इष्टा पूर्त्ते संसृजेथामिति ख०, ग० च।

७ प्रत्ते काममन्नाद्यं दुहाते इति ख०, ग० च।

८ नासिकया चक्षुषी विधृते सर्वत इति ख०।

९ अपि धृते इति ख०।

अहनी जन्मनी सुम्निनी सामनी वैष्णवी ऐन्द्रवी दर्व्वी द्यावापृथिवी, एतानि पदानि प्रग्रहसञ्ज्ञानि भवन्ति(१)। यथा, अमीत्वा जहति(२)। चक्षुषी वा एते(३)। कार्ष्णी उपानहा(४)। पितरो-देवता। फल्गुनी नक्षत्रम्। देवतेति किं। यद् द्वितीयꣳ सा फल्गुनी। मुष्टीकरोति वाचं। प्रधीताव्कथ्या। रजतनाभी वैश्वदेवी। वपाश्रपणी प्रहरति। वपेतिकिं। पशुश्रपणीति शाखान्तरे। अहनी द्यौरिवासि। उभे निपासि जन्मनी। सुम्नाय सुम्निनी। सामनी प्रतिष्ठित्यै। वलगहनी वैष्णवी। ऐन्द्रवी तिरश्ची। दर्व्वी श्रीणीष आसनी। द्यावापृथिवी एव स्वेन। द्यावेति किं। मही द्यौः पृथिवी च नः॥

## पूर्वश्च॥ १३॥

'च' कारेणान्वादिष्टद्यावापृथिवी इत्येतस्मात् 'पूर्वः', अपि ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा, यावती द्यावापृथिवी(५)। अविन्ने द्यावापृथिवी (६)॥

## न रुन्धे नित्यम्॥ १४॥

'रुन्धे' इत्यन्तः स्वरो द्यावापृथिवी इत्यस्मात् पूर्व्वोपि 'न',

---

१ सञ्ज्ञानि स्युरिति ग०, इ० मु० च।

२ अमी वा इदमभूवन्निति ग०।

३ एते यज्ञस्येति ग०।

४ कार्ष्णी उपानहावुपमुञ्चत इति ख०, ग० च।

५ द्यावापृथिवी मह्वित्वेति ख०, ग० च।

६ द्यावापृथिवी धृतव्रते इति ख०।

प्रगृह्यो भवति। रुन्धे द्यावापृथिवी गच्छ (१)। 'नित्य'शब्दः प्राप्त्यन्तरनिषेधार्थः। अवरुन्धे यदा सहस्रं। वीडादीति-प्राप्तिः।

## हरी सहुरी सहूती कल्पयन्ती आपृषती आहुती ॥१५॥

हरी सहुरी सहूती कल्पयन्ती आपृषती आहुती, एतेषु पदेष्वन्त्यस्वरः प्रगृह्यो भवति(२)। यथा, हरी ते युञ्जा पृषती(३)। सहुरी सपर्य्याम्। सेति किं। तमाहुरी प्लावयन्तीति(४) शाखान्तरे। सहूती वनतं गिरः। सेति किं। हूती पुनर्जुहोतीति शाखान्तरे। अध्वरं कल्पयन्ती ऊर्द्ध्वं। युञ्जापृषती अभूतां। आपृ इति किं। पृषती स्थूलपृषती। पुरोडाशमेते आहुती(५)। आहु इति किं। हुती तस्माद्देवा इति, शाखान्तरे।

## पूर्व्वस्य ॥ १६ ॥

'च'कारान्वादिष्टादाहुती इत्येतस्मात् 'पूर्व्वः', अपि(६) ईकार एकारो वा पदान्तः प्रगृह्यो भवति। यथा, पुरोडाशमेते आहुती (७)।

---

१ गच्छस्वाहेत्याहेति ख०।

२ एतेष्वन्त्यस्वरः प्रगृह्यः स्यादिति ग०, इ० मु० च।

३ पृषती अभूतामिति ग०।

४ तमाहुरीद्वयत इति ग०।

५ आहुती जुहोतीति ख०।

६ चकारान्वादेशादाहुती इत्येतस्मात् पूर्वं इति ग०, इ० मु० च।

७ एते आहुती जुहुतीति ख०।

## वाससी-तपसी-रोदसी ॥ १७ ॥

वाससी तपसी रोदसी, इत्येतेषु पदेष्वन्त्यस्वरः प्रग्रह्यो भवति (१)। यथा, वाससी इव विवसानौ। दीक्षातपसी अवरुन्धे। इमे वै रोदसी तयोः ॥

## परश्च ॥ १८ ॥

'च'काराराान्वादिष्टाद्रोदसी इत्येतस्मात् 'परः', ईकार-एकारौ वा पदान्तः प्रग्रह्यो भवति। यथा, अन्विन्द्रꣳ रोदसी वा वसाने ॥

## व्यचस्वती-भरिष्यन्ती-नःपृथिवी ॥ १९ ॥

एतेषु पदेष्वन्त्यः स्वरः प्रग्रह्यो भवति(२)। यथा, व्यचस्वती संवसाथां। अग्निमन्तर्भरिष्यन्ती(३)। द्यावा नः पृथिवी इमं। न इति किं। रेजते अग्ने पृथिवी मखेभ्यः ॥

## येअप्रथेतामुर्वी-तेअस्य-यंक्रन्दसी-छन्दस्वती-तेआच-रन्ती-अन्तरैतासु ॥२०॥

येअप्रथेताम् उर्वी तेअस्य यंक्रन्दसी छन्दस्वती तेआच-रन्ती अन्तरा, 'एतासु' ऋक्षु, ईकार एकारौ वा पदान्तः प्रग्रह्यो

१ इत्येतानि प्रग्रहसञ्ज्ञानि भवन्तीति ख०, इ० मु० च। इत्येतानि प्रग्रह-सञ्ज्ञानि स्युरिति ग०।

२ एतेष्वन्त्यस्वरः पदान्त इति इ० मु०।

३ भरिष्यन्ती ज्योतिष्मन्तमिति ख०।

भवति(१) । यथा, ये अप्रथेताममितेभिः । अप्रथेतामिति किं । ये ते पन्थानः । उर्व्वी रोदसी वरिवः (२) । ते अस्य योषणे (३) । अस्येति किं । ते वर्द्धन्त(४) । यं क्रन्दसी अवसा(५) । क्रन्दसीति किं । यमग्ने पृत्सु मर्त्यं । छन्दस्वती उषसा (६) । ते आचरन्ती समाना(७) । आचरन्तीति किं । ते नो अर्व्वन्तो हवनश्रुतः । अन्तरा मित्रावरुणा चरन्ती ॥

## नोपस्थे ॥ २१ ॥

एतासृचु 'उपस्थे' इत्यन्तस्वरः(८) प्रग्रह्यो 'न' भवति । यथा, बिभृतामुपस्थे । उपेति किं । ये प्रतिष्ठे अबभृतां(९) ॥

## इरावतीप्रभृत्यादाधार ॥ २२ ॥

'इरावतीप्रभृति' इरावतीशब्दमारभ्य (१०) 'आदाधार' दाधारशब्दपर्य्यन्तम्, ईकार एकारो वा पदान्तः प्रग्रह्यो भवति । यथा, इरावती धेनुमती हि भूतं ॥

---

१ प्रग्रह्यः स्यादिति ग० ।

२ उर्वी रोदसी वरिवः कृणोतमिति ख० ।

३ योषणे दिव्ये इति ख० ।

४ वर्द्धन्त स्वतवसो महित्वानेति ग० ।

५ अवसा तस्तभाने इति ख० ।

६ उषसा पेपिशाने इति ख० ।

७ समानेव योषेति ख० ।

८ अन्त्यस्वरः पदान्त इति ग०, इ० मु० च ।

९ अभवतां वसूनामिति ख०, ग० च ।

१० इरावती इति शब्दमारभ्येति ख०, इ० मु० च ।

## पूर्व्वजेप्रभृत्यायं ॥ २३ ॥

'पूर्व्वजेप्रभृति', 'आ अयं', पर्य्यन्तः (१) ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा, पूर्व्वजे ऋतावरी इत्याह। 'आ' इति पदं(२) मर्य्यादायां वर्त्तते। ननु, पूर्व्वजे पितरेत्यारभ्य अयं पुरोभुव इत्येतत्पर्य्यन्तस्थलमेतत्सूत्रविषयः किं न स्यात्। उच्यते, भवत्पक्षे उपबन्धान्तःपातित्वात् कृणुध्वꣳ सदने इति ग्रहणस्य वैयर्थ्यं माभूदिति(३)। तस्मात् स्थलमेतत्सूत्रविषयः(४) न भवति। नन्वत्र पूर्व्वजेग्रहणमनर्थकं। पूर्व्वजे कृणुध्वꣳ सदने इति तत्रैवोक्तत्वात्। किन्तु वरीप्रभृतीत्येतावतैवालं। नेति ब्रूमः(५)। वरीग्रहणद्वयसम्भवात्, कुत्र वा अवधित्वेन(६) स्वीकार-इति सन्देहः स्यात्। किञ्च आसन्नꣳ सन्देहे इतिवचनादुत्तरा-वधिसन्निकृष्टो द्वितीयवरीशब्द एव स्वीकर्त्तव्यः। तथासति पूर्ववरीशब्दस्य च प्रग्रहत्वं न स्यात्। तच्चानिष्टम्। ननु, भवन्-मतेपि पूर्वजेद्वयसम्भवात् कुत्र वा ग्रहणमिति सन्देहः समानः। किञ्च युक्त्युक्तमनिष्टञ्च समानं(७)। मैवं। पूर्वजे इति पद-

---

१ अयं पर्य्यन्तमिति ख०।

२ आङ्पदमिति ग०, इ० मु० च।

३ वैयर्थ्यं स्यात् तन्माभूदितीति इ० मु०।

४ तस्मादेतत्स्थलमेतत्सूत्रविषय इति ग०, इ० मु० च।

५ ऋतावरीप्रभृत्येतावतैवालमिति चेन्नेति ग०।

६ अवधिनियमत्वेनेति ग०, इ० मु० च।

७ युक्त्युक्तमनिष्टं तुल्यमिति ग०। युक्तियुक्तसन्निकृष्टञ्च समानमिति ख०।

मत्र कार्य्यभाक्त्वेन नोच्यते, येन पौनरुक्त्यं भवेत्, किन्तु पूर्वंश्चासौ जेशब्दस्य पूर्वंजे। एतत्प्रभृतीत्युपलक्षणत्वेनोच्यते(१)॥ ननु तर्हिं उपह्नत इति पदमतिक्रम्य अयमित्यवधित्वेन किमुच्यते (२)। उपह्नत इति पदानां बाहुल्येपि आसन्नं सन्देहे इति वचनात् प्राथमिकस्यैव ग्रहणसिद्धेः। मैवं। उपह्नत इतिग्रहणे सूत्रगौरवदोषः(३)। उपेत्येतावन्मात्रस्येड्ग्यांशस्य पदत्वं गौणं(४)। अयं इत्यस्य तु मुख्यम्। मुख्ये सम्भवति न गौणमिति न्यायादयमिति युक्तं ग्रहणम्। नन्वेतेनैव न्यायेन आद्यवधेरनुपपन्नता(५)। नायं पक्षः। मुख्ये सम्भवाभावात्(६)। तथाहि। ह्वयत इति मुख्ये स्वीकृते अभिविधिन्यायेन तस्यापि प्रग्रहत्वं स्यात्(७)। तच्चानिष्टं। अते समानपद इतिवचनादेतदिष्टं न भवतीति चेत्। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमितिन्यायात्, ह्वयत इत्युच्चार्य्य तस्य निषेधकथनादपि तदनुच्चारणमेव रमणीय-

---

१ प्रभृतीत्युपलक्षकत्वेनोच्यते इति ख०, इ० मु० च। एतत्प्रभृतीनित्युपलक्षकत्वेनोच्यते इति ग०।

२ इति पदमुपक्रम्यायमित्यवधित्वेन किमर्थमुच्यते इति ग०। इति पदमतिक्रम्यायमित्यवधित्वेन किमर्थमुच्यते इति इ० मु०।

३ उपह्नत इति पदग्रहणे तत्र गौरवदोष इति ग०, इ० मु० च।

४ उपेत्यैतावन्मात्रभूतस्यादिभूतस्यांशभूतस्येति ग०। उपेत्यैतावन्मात्रस्यादिभूतस्यांशस्येति इ० मु० च।

५ चाद्यपदस्यानुपपन्नतेति ख०, ग० च।

६ मुख्यसम्भवाभावादिति ग०, इ० मु० च।

७ तस्यापि ग्रहणं स्यादिति ख०, ग०, इ० मु० च।

मिति(१) मुख्यसम्भवाभावस्तदवस्थ एव। तस्मादस्मिन् सूत्रेऽनुपपत्तिलेशो नास्ति॥

## इमे गर्भमुपैवरसेनपरः॥ २४॥

'इमे', इत्यन्त्यस्वरो गर्भम् उपएव रसेन, एवम्परः प्रग्रहः(२) स्यात्। यथा, यदिमे गर्भमदधातां। इमे उपावत्स्यतः। इमे एव रसेनानक्ति। रसेनेतिकिं। इम एवास्मै लोकाः। एवम्परइति किं। अध्वर्त्तव्या वा इमे देवाः॥

## क्रूरमापःसजूर्ब्रह्मजेतेषु च॥२५॥

इमे इति शब्दमन्वादिशति 'च'कारः(३)। क्रूरं आपः सजूः ब्रह्मज, 'एतेषु' अनुवाकेषु, इमे, इत्यन्त्यस्वरः, पूर्व्वोक्तपरनिमित्ताभावेपि प्रग्रहो भवति। क्रूरमिव वेत्यत्र यथा, इमे वै रोदसी। आपो वरुणस्येत्यत्र यथा, इमे एवोपधत्ते। सजूरब्द इत्यत्र यथा, इमे अश्विना संवत्सरः। ब्रह्मजज्ञानमित्यत्र यथा, न हीमे यजुषाप्तुं(४)। जेति किं। ब्रह्मवादिन इत्यत्र त्रय इमे लोकाः(५) इत्यस्य प्रग्रहत्वं माभूदिति॥

---

१ वरमिति ग०।

२ एवम्परः पदान्तः प्रग्रह इति ग०, इ० मु० च।

३ इमे इति चशब्दोन्वादिशति इति इ० मु०। चकार इमे इति शब्दमन्वादिशतीति ख०।

४ यजुषाप्तुमर्हतीति ख०।

५ ब्रह्मवादिनो वदन्तीत्यत्र इमे लोका इति ग०। ब्रह्मवादिनो वदन्त्यद्भिरित्यत्र य इमे लोका इति ख०।

## पूर्णे च ॥ २६ ॥

'च'शब्दो ब्रह्मजज्ञानमित्यन्वादिशति। 'पूर्णे' इत्यन्तस्वरः ब्रह्मजज्ञानमित्यनुवाके प्रग्रह्यो भवति। यथा, पूर्णे उपदधाति। पूर्णे एवैनं। अस्मिन्ननुवाक इति किं। यो वै पूर्ण आसिञ्चति ॥

## दृढे ॥ २७ ॥

'दृढे'इत्यन्त्यस्वरः (१) सर्व्वत्र प्रग्रह्यो भवति। यथा, येन द्यौरुग्रा पृथिवी च दृढे ॥

## घ्नीचक्रे पपरे ॥ २८ ॥

'घ्नी', 'चक्रे', इत्येते पदे 'पपरे,' प्रग्रह्ये(२) भवतः। यथा, वार्त्तघ्नी पूर्णमासे। चक्रे पृष्ठानि। पपर इति किं। यद्विरूपया वार्त्तघ्नी स्यात्। समिधानचक्रे नीचा तं (३)। घ्नीचक्रे इति किं। शका भौमी पान्त्वः। येषामीशे पशुपतिः। पकारः परः याभ्यां ते, पपरे ॥

## न्वती ॥ २९ ॥

'न्वती' इत्यन्त्यस्वरः प्रग्रह्यो भवति। यथा, ओमन्वती तेस्मिन्। वृधन्वती अमावास्यायां। नकारेण किं। कर्णकावत्येतया ह स्म ॥

---

१ इत्यस्मिन्नन्त्यस्वरः सर्वत्र इति ख०, इ० मु० च। इत्यन्तस्वर इति ग०।

२ इत्येते सर्वत्र पदे पपरे प्रग्टह्ये इति ख०।

३ नीचात वच्चि इति ख०।

## पपरो न ॥ ३० ॥

सान्निध्यान् न्वतो इति लभ्यते। 'पपरः' न्वतो इत्यन्त्यस्वरः प्रग्रहः 'न' भवति। यथा, मूर्द्धन्वतो पुरोऽनुवाक्या भवति॥

## समीची॥ ३१ ॥

'समीची' इत्यन्त्यस्वरः प्रग्रहो भवति। यथा, समीची रेतः सिञ्चतः। पश्चात् समीची ताभिः॥

## नपरो न ॥ ३२ ॥

सान्निध्यात् समीची इति लभ्यते। 'न', खलु समीची इत्यन्त्यस्वरः 'न'कार'परः', प्रग्रहो भवति। समीची-नामासि॥

## ची यत्प्रपरः ॥ ३३ ॥

'ची' इत्यन्त्यस्वरः 'यत्परः' 'प्रपरः' वा प्रग्रहः स्यात्। यथा, ऐच्चवी तिरश्ची यत्(१)। यत्र प्राची प्रेतं (२)। एवम्पर इति किं। सा प्राची दिक्। तकाररेफाभ्यां किं। गौष्टृताची यज्ञः। प्राची पत्न्यन्वास्ते। चीति किं। एकादशिनी यदग्नौ। प्रजनने प्रजननी (३)॥

---

१ ऐच्चवी तिरश्ची यदाश्ववाल इति ख०। एच्चवी तिरश्चो यत्रेति क०।

२ प्रेतमध्वरमिति ख०, ग० च।

३ प्रजनने प्रजननमिति ख०।

## आन्महौ ॥ ३४ ॥

'आन्' इत्येतद्विशिष्टे 'महौ' ग्रहणे अन्त्यस्वरः प्रग्रह्यो भवति ([१])। यथा, महान्महौ अस्तभायत्॥ आनिति किं। महौ द्यौः पृथिवी च नः। आकारेण किं। वयुनाविदेक इन्महौ॥

## पतीश्रुतिः ॥ ३५ ॥

'पती' इत्यस्य यत्र यत्र 'श्रुतिः' श्रवणमस्ति, तत्र तत्र प्रग्रह्यत्वं विज्ञेयं। यथा, द्वौ पती विन्दते। शुभस्पती इदं([२])। श्रुतिरिति किं। दम्पती वामं ([३]), प्रियमिन्द्राबृहस्पती, इत्यादावपि पदैकदेशे प्रग्रह्यत्वाय॥

## ग्नौ ॥ ३६ ॥

'ग्नौ'इति प्रग्रह्यो भवति। यथा, अन्तराग्नी पशूनां। विश्वामित्रयमदग्नी([४])॥

## न ह्निपरः ॥ ३७ ॥

ग्नौ इति सान्निध्याल्लभ्यते। 'न' खलु ग्नौ इति पदान्तः 'ह्निपरः' प्रग्रह्यो भवति। यथा, ऐन्द्राग्नी हि वार्हस्पत्या। एवम्परइति किं। इन्द्राग्नी हवामहे इति शाखान्तरे॥

---

१ प्रग्रह्यः स्यादिति ह० सु०।

२ इदमह्रमिति ख०।

३ वाममश्नुत इति ख०।

४ यमदग्नी वसिष्ठेनेति ख०, ग० च।

## वीड् द्वारौ कृष्णस्वरावो यदापरः ॥ ३८ ॥

'वीड् द्वारौ कृष्णः चरावः यदा' इत्येतत्'परः' (१) ईकार एकारो वा पदन्तः प्रग्रहो भवति। यथा, धिषणे विड्वसती वीडयेथां। डकारेण किं। आपश्च मे वीरुधश्च(२)। देवी द्वारौ वा(३)। रौ इति किं। द्वादश सम्पद्यन्ते द्वादश। अतिष्ठमाने कृष्णो रूपम्(४)। विसर्गेण किं। चात्वाले कृष्णविषाणां(५)। विवसानो ये चरावः। राव इति किं॥ राये च नः स्वपत्याय(६)। नन्नमाने यदेदन्ता। ननु, यतन्ते यदाचिषुरित्यत्र(७) प्रग्रहत्वं किं न स्यात्। पदग्रहणेषु पदं गम्येतेति वचनात् नेति ब्रूमः (८)॥

## न त्री ऽक्ते नित्यम् ॥ ३९ ॥

'त्री' 'अक्ते' 'इत्येतयोरन्त्यस्वरः 'नित्य' प्रग्रहः 'न' स्यात्। यथा, वरुणाय रात्री कृष्णः। एन्यक्ते कृष्णः(९)। वीड़ादिप्राप्तिरनयोः। 'नित्य'शब्दः प्राप्त्यन्तरप्रतिषेधकप्रयोजकः(१०)। यत्रीपि कर्त्तोरिति तावब्रूतां। गमयेतो भवत-

१ इत्येवम्पर इति ख०, ग०, इ० मु० च।

२ वीरुधश्च मे इति ख०।

३ द्वारौ मामेति ख०, ग० च।

४ यज्ञायातिष्ठमाने कृष्ण इति ख०।

५ विषाणां प्रास्यति इति ग०।

६ स्वपत्याय देवेति ग०।

७ यदाचिषुर्दिव्यमित्यत्रेति ग०।

८ वचनान्न भवतीति ब्रूम इति ख०, ग०, इ० मु० च।

९ अक्ते कृष्णो रात्रिये इति ख०।

१० प्राप्त्यन्तरप्रतिषेधक इति ख०।

इत्यादिना प्राप्तिः । स्वरान्ते नो बाह्यौ । सोमायस्वेतिप्राप्तिः ॥

## आकारैकारपूर्वस्तु बहुस्वरस्य ते थे ॥ ४० ॥

'बहुस्वरस्य' पदस्य, सम्बन्धो 'ते' इति 'थे' इति वा आकारपूर्व्व एकारपूर्व्वो वा प्रग्रह्यो भवति । यथा, मृजाते यौ विद्विषाणयोः । शुक्रामन्थिनो गृह्येते । पृथिव्या रिरिचाथे(१) । इष्ठ्ठहणाय नु-देथे । एवम्पूर्व्व इति किं । आवृश्चते वा एतत्(२) । त्रीणि व्रता विदथे अन्तरेषां । बहुस्वरस्येति किं । तत् प्रवाते(३) । यदेते गृह्यन्त एषां । ते थे इति किं । अनूच्यमान आसादयति । वीड्वादिनिमित्तसापेक्षतानिवर्त्तकः 'तु'शब्द इति वररुचिपक्षः । माहिषेयपक्षस्तु वक्ष्यते, पूर्व्वसूत्रोक्तनिषेधनित्यशब्दज्ञापितानु-वृत्तिं निवारयतीति । तत्र वररुचिमतं रुचितं(४) । बहवः स्वराः यस्मिन् तत् बहुस्वरं, तस्य । अत्र स्वरशब्देनोपादान-वता(५) बहुशब्देन व्यक्तिभेदो विज्ञेयः ॥

## न शार्याते ॥ ४१ ॥

'शार्य्याते' इत्यन्त्यस्वरः प्रग्रहः 'न' भवति । यथा, शार्याते अपिवः सुतस्य । पूर्व्वसूत्रप्राप्तौ सत्यां कण्ठोक्त्या निषेधोऽनेन(६) विधीयते ॥

---

१ रिरिचाथे द्विवस्वेति ख० ।

२ एतद्यजमान इति ग० ।

३ प्रवाते विषजन्ति इति ग० ।

४ रुचिरमिति ग० ।

५ स्वरशब्दोपादानाच्चेति इ० मु० । बहुस्वररूपशब्देनोपादानवतेति ग० ।

६ कण्ठोक्तनिषेधोनेनेति ग०, इ० मु० च । कण्ठोक्तो निषेधोनेनेति ख० ।

## ते मापातंनमएनमभिवायुर्गर्भमुपाह्वस्तुपरः ॥ ४२ ॥

मापातं नमः एनमभि वायुः गर्भम् उप अह्वः तु, एवं 'परः' 'ते' इति शब्दः, प्रग्रहः स्यात्। यथा, ते मा पातमास्य। पातमिति किं(१)। ते मास्मिन् यज्ञे(२) परिदधावहै पुनस्ते। नमोऽग्नये। नम इति किं(३)। ते न व्यजयन्त। ते एनमभिसमनह्येतां। अभीति किं। त एनं भिषज्यन्ति ब्रह्मणः। ते वायुर्व्यवात्। युरिति किं। ते वाचꣳ स्त्रियं। ते गर्भमदधातां। ते उपामन्त्रयन्त। ते अह्नोरात्रयोः। ते त्वावनीत्सृज्ये इत्याहुः। उकारेण किं। ते ते धामान्युश्मसि। एवम्पर इति किं। ते देवाः। ते इति किं। बृहदुक्थे नमः(४)। अमुष्मिंल्लोक उपशेरे। यन्ति वा एते सवनाद्येहः॥

## अनुदात्तो न नित्यं ॥४३॥

मापातमित्यादिपरोपि ते इत्यन्त्यस्वरः 'अनुदातः' 'नित्यं' प्रग्रहो 'न' भवति। यथा, उभाभ्यामुत ते नमः (५)। नित्यमिति किं। लक्षणान्तरप्राप्तस्यापि प्रतिषेधो यथा स्यात्। नमस्ते अस्त्वायुधाय। गमयतो भवत इति प्राप्तिः(६)॥

---

१ मा पातमिति किमिति ख०।

२ यज्ञे उपक्रयध्वमिति ख०।

३ म इति किमिति ग०।

४ बृहदुक्थे नम इति क०, ग० च।

५ बाहुभ्यामुत ते नम इति ख०।

६ भवत इत्यादिना प्राप्तिरिति इ० मु०।

## एते तनुवौवैसमेवहियज्ञपदिष्टक्-परः ॥ ४४ ॥

तनुवौ वैसं एव हि यज्ञ पत् इष्टक्, एवं 'परः'(१) 'एते' इत्यन्यस्वरः (२) प्रग्रह्यो भवति । यथा, तस्यैते तनुवौ । एते वै संवत्सरस्य चक्षुषी । समिति किं । एते वा इडायै स्तनाः । स एते एव नमस्यन्नुपाधावत् । एते हि देवानां । चक्षुषी वा एते यज्ञस्य । एते पदे अथो(३) । यदेते इष्टके उपदधाति । एवम्पर इति किं । अथ कतम एते देवाः । एते इति किं । मनुत एवैनं । पुष्करपर्णे ह्येनं । अग्रे यज्ञपतिं धत्त । सप्तमे पदे जुहोति ॥

## परश्च द्वयोः ॥ ४५ ॥

निमित्तिनिमित्तयोः 'द्वयोः', उपरि वर्त्तमानयोः(४) पत् इष्टक् इत्येतयोः(५) 'च'कारान्वादिष्टयोः परत ईकार एकारौ वा पदान्तः प्रग्रह्यो भवति । यथा, यज्ञस्य ह्येते पदे । यदेते इष्टके उपदधाति । निमित्तिन उपरि वर्त्तमानयोरिति किं ॥ सप्तमे पदे जुहोति । तस्यास्ते देवीष्टके ॥

---

१ इत्येवम्पर इति ख०, ग०, इ० मु० च ।

२ इत्यन्यस्वरः पदान्त इति ग०, इ० मु० च ।

३ यज्ञस्य ह्येते पदे अथो इति ग० ।

४ निमित्तिन उपरि वर्त्तमानयोरिति ख०, ग०, इ० मु० च ।

५ पदिष्टकशब्दयोरिति इ० मु० ।

## स्थःपरः ॥ ४६ ॥

'स्थः' इत्येवं 'परः' ईकार एकारौ वा पदान्तः प्रग्रह्यो भवति। यथा, विष्णोः श्याप्त्रे स्थः (१)। विसर्गेण किं। लोके स्थ युष्माएँस्ते नु ॥

## परश्चोभयोः ॥ ४७ ॥

'च'कारान्वादिष्टयोः पूर्व्वसूत्रोक्तनिमित्तनिमित्तिनोः 'उभयोः' 'परः', ईकार एकारौ वा पदान्तः प्रग्रह्यो भवति। यथा, शिल्पे स्थस्ते वामारभेते वा(२)। दृढ़े स्थः शिथिरे समीची। उभयोरिति किं। वृषणौ स्थ उर्व्वशी। परश्च द्वयोरिति(३) वाच्ये उभयोरिति शब्दान्तरमर्थान्तरज्ञापकं(४)। निमित्तिसहितयोः पूर्व्वसूत्रोक्तयोर्निमित्तयोः परः प्रग्रह्यो भवति, परश्च द्वयोरिति सूत्रार्थः। अत्र तु सूत्रे निमित्तनिमित्तिनोरुभयोः परः प्रग्रह्यः स्यादिति विषयभेदो विज्ञेयः(५) ॥

## सोमायस्थैतस्मिन् ॥ ४८ ॥

'सोमायस्थ राज्ञे 'इत्येतस्मिन्ननुवाके ईकार एकारौ वा

---

१ विष्णोः श्नप्त्रे स्थ इति क०।

२ शिल्पे स्थस्ते वामारभे इति ख०, ग० च।

३ तयोरिति क०, ख०।

४ शब्दान्तरमर्थभिन्नज्ञापकमिति ख०।

५ विशेषाद्भेदो विज्ञेय इति इ० मु०। विशेषणभेदो पिज्ञेय इति ग०।

पदान्तः प्रग्रह्यो भवति। यथा, अवी इ धेनू इत्यादि। स्वेति किं। सोमाय पितृमत इत्यत्र माभूदिति॥

## इ॥४९॥

'इ' इत्यन्त्यस्वरः सर्व्वत्र (१) प्रग्रह्यो भवति। यथा, इे इे सञ्चरति। यद्दे नश्येतां॥

## परश्च॥५०॥

'च'कारो इ इत्यन्वादिशति। इ इत्येतस्मात् 'परः' ईकार एकारो वा पदान्तः प्रग्रह्यो भवति। यथा, इ शुक्ले इ कृष्णे मूर्द्धन्वतीः॥

## एकव्यवेतोऽपि॥५१॥

'एकव्यवेतोऽपि' (२) इ इत्येतस्मात् पर ईकार एकारो वा पदान्तः प्रग्रह्यो भवति। यथा, इ ह्येते देवते (३)। इ वाव देवसत्रे। एकेन व्यवेतः (४) एकव्यवेतः। 'अपि'शब्दो इ इत्यन्वादिशति, मण्डूकप्लुतिन्यायेन॥

---

१ पदान्तः सर्व्वत्रेति ग०, इ० मु० च।

२ एकव्यवहितोपि इति ख०, ग० च।

३ देवते सम्यद्धे इति ख०।

४ एकेन पदेन व्यवेत इति ख०, ग०, इ० मु० च।

**गमयतो भवतोऽनूकारात् परं तनूयदकरोत्कुर्य्यादिष्टिष्वग्रूतां प्रवर्त्तास्ताᳪस्तभ्नीतां वाचयतिबिभृतस्ताग्निं गायत्रं ताभ्यामेवोभाभ्यामवान्तरं पर आषष्ठात् ॥५२॥**

'गमयतः' 'भवतः', 'अनूकारात्' उकारव्यतिरिक्तवर्णात्, 'परं', 'भवतः' इति पदं। नञो यद्यप्यभावो मुख्योऽर्थः, तथापि तदन्यार्थता स्वीकृता, लक्ष्यानुसारात्। तनू यत्, अकरोत्, कुर्य्यादिष्टिषु, कुर्यादिति पदमिष्टिषूत्येतत्। 'इष्टयो नाम दशमादयस्त्रयः प्रपाठकाः (१) उत्तमानुवाकवर्जिताः(२)। अग्रूतां प्रवर्त्त आस्तां स्तभ्नीतां वाचयति बिभृतस्त अग्निं गायत्रं ताभ्यामेव उभाभ्याम् अवान्तरम्, इत्येवम्'परः' 'आषष्ठात्' पदात्, पूर्व्वौ वर्त्तमान ईकार एकारो वा पदान्तः प्रग्रह्यो भवति। अभिविधावयम् 'आकारः। तेन सहेत्यभिविधिः। यथा, ते एवैनं प्रतिष्ठां गमयतः। उत्तरावती भवतः। अनूकारात् परमिति किं। दीचन्तेऽन्तनामानाद्वतू भवतः (३)। एते वै महायज्ञस्यान्ते तनू यत्। यदिति किं। परिपतये त्वा गृह्णामि तनू नप्त्रे त्वा गृह्णामि (४)। बुध्नवती अग्रवती याज्यानुवाक्ये अकरोत्। मानवी ऋचौ धाय्ये कुर्य्यात्।

---

१ त्रयः प्रश्ना इति ख०, ग०, ह० मु० च।

२ उत्तमानुवाकरहिता इति क०, ख० च।

३ दीचन्तेतरामानाद्दतूभवत इति क०।

४ त्वा गृह्णामि तनू नप्त्रे इति ख०, ग० च।

इष्टिष्विति किं। अग्नये दात्रे पुरोडाशमष्टाकपालं कुर्य्यात्। ते अब्रूतां वरं वृणावहै। हविर्द्धाने(१) प्राची प्रवर्त्तयेयुः। वर्त्तेति किं। ते दिव्याऽ समभ्रियन्त त्वया प्रजानामि। इमे वै सहास्तां। वैश्वदेवाग्निमारुते उक्थे अव्यथयन्तौ स्तभ्नीताम्। उत्तमे औदुम्बरी वाचयति। ते एव यजमानस्य रेतो बिभृतस्तस्मात्। तेति किं(२)। मन्महे यावात्मन्वद्विभृतो यौ च रक्षतः। एते दधाते ये अग्निं गायत्रं। गायत्रमिति किं। सधस्थेऽग्निं पुरीष्यम्। एते वै यज्ञस्याञ्जसायनी श्रुती ताभ्यामेव। अत्र पदद्वयमेकं निमित्तमित्येतत्पदमुद्दिश्य आषष्ठनियमभङ्गप्रसङ्ग इति चेत्। मैवं(३)। निमित्तैकदेशस्य षष्ठत्वोपपत्तेः। सकलस्यापि निमित्तस्य षष्ठत्वमुपपद्यते(४)। लोकेप्यवयवधर्म्मेणावयविनो विशेषसिद्धेः। तथाहि, कर्णे कुण्डलं धारयन्तं कुण्डली देवदत्त इति वदन्ति। एवेति किं। अपहऽस्त्वग्ने ताभ्याम्। ये द्वे अहोरात्रे एव ते उभाभ्याम्। उत्सृज्ये इत्याहुर्यँ अवान्तरं। अन्तरमिति किं। सन्तेवते हेडः। आषष्ठादिति किं। पर इत्युत्तर इति परिभाषया अनन्तरस्यैव परत्वं स्यात्। तन्माभूदिति॥

---

१ हविर्धानी इति ख०।

२ स्त्रे तिकिमिति क०, ग० च।

३ इति चेन्नायं प्रसङ्ग इति ख०, इ० मु० च।

४ षष्ठत्वमुपपद्यत इति क०।

## न ग्रामी वर्चसो मिथुनो मासे लोके धत्ते॥ ५३ ॥

ग्रामी वर्चसी मिथुनी मासे लोके धत्ते, एतेष्वन्त्यस्वरो गमयतो भवत इत्यादिपरोपि प्रग्रहो 'न' भवति। यथा, ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतः। ब्रह्मवर्चस्येव भवत्युभयतो रुक्मो भवतः। अथ मिथुनी भवतः। पूर्णमासे प्रयच्छत्तावब्रूतां। लोके प्रतितिष्ठन्तो यन्ति द्वौ षड्ढौ भवतः। धत्ते ज्योतिष्मतावस्मा इमौ लोकौ भवतः॥

## अते समानपदे नित्यमवे चावे च ॥५४॥

निषेधं 'च'कारोन्वादिशति। अते अवे इत्यनयोः पदैकदेशयोरन्त्यस्वरः 'समानपदे' वर्त्तमानो गमयतो भवत इत्यादिपरोपि नित्यं प्रग्रहो न भवति। यथा, अवकश्यतेऽतिरात्रावभितो भवतः। अभ्याह्वयते वज्रमेनमभिप्रवर्त्तयति। अनातधृष्णावे। उभाभ्यामुत ते नमः। समानपद इति किं। एव ते उभाभ्याम्। अत्र नित्यशब्दः प्राप्त्यन्तरपरिहारार्थं इति सोदाहरण उपबन्धस्तु देशायेति सूत्रे प्रसङ्गादुक्तम्। समानञ्च तत् पदञ्च समानपदम्, तस्मिन् समानपदे॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्थोऽध्यायः ॥४॥

---

अथ पञ्चमोऽध्यायः ।

## अथ सꣳहितायामेकप्राणभावे ॥ १ ॥

'अथ' इत्ययमधिकारः । 'संहितायामेकप्राणभावे' इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः । संहितेति कोऽर्थः । नानापदसन्धानं संयोग इति सूत्रेणोक्तः संहितार्थः । परः सन्निकर्षः संहितेति वैयाकरणाः पठन्ति । एकसमुत्थः प्राणः एकप्राणः, तस्य भावस्तद्भावः, तस्मिन्, इत्यात्रेयमतं । अन्यथापि समासः सङ्गच्छते, एकप्राणेन भाव्यते जन्यते उच्चार्य्यते इत्येकप्राणभावः । एकेनोच्छ्वासेन यावानुच्चार्य्यते वेदभागः, तावान् 'एकप्राणभावः' इत्यर्थः । अतएवावसाने पदविधिः(१) । ननु संहितायामित्येतावतैवालम्, एकप्राणभाव इति वा उभयारम्भेण किम् । उच्यते, एकप्राणभाव इत्यनारभ्यमाणे प्रवृत्तस्य संहिताविधेः पदावसानत्वं नेष्यते । संहितायामित्यारभ्यमाणे तु पदेष्वेकप्राणभावः(२) उपपद्यते इति वक्ष्यमाणं कार्य्यं कुत्र वा भवतीति(३) सन्देहः स्यात् । तस्मादस्मिन्नुभयारम्भे प्रयोजनमस्ति ॥

## यथायुक्तादिविधिः सा प्रकृतिः ॥ २ ॥

'प्रकृतिः' संहितास्वरूपम्, अनेनोच्यते । प्रकृतिर्विक्रमक्रम इति

---

१ नपदविधिरिति क० ।

२ पदेष्वप्येकप्राणभाव इति ग०, इ० मु० च । पदे एकप्राणभाव इति ख० ।

३ क्व भवतीति इ० इति मु० ।

विज्ञेयत्वेन विधानात्(१)। 'यथायुक्तात्' यथास्थितात् पदपाठात् कूटस्थात् अविचालिनः(२), 'विधिः' 'सा' 'प्रकृतिः' संहिता(३) विज्ञेया। 'विधिः' विधानं प्रकृतिरित्यर्थः। यथा, स्वधा अस्युर्वी चासि। धन्वन्निव प्रपा असि। सहस्रस्य प्रमा असि। प्रवुध्निया ईरते। ज्या इयꣳ समने। अमिनन्त एवैः। अत्र सूत्रे पदानां परस्परान्वयो महाभाष्यवचनेन(४) विज्ञेयः। तच्च वचनं तावर्णप्रकृतय इत्यत्र पठितव्यम्(५)। एवमत्रापि स्वरितयोर्मध्ये यत्र नीचमित्यादौ मन्तव्यम्॥

## तत्र पूर्व्वं पूर्व्वं प्रथमम्॥ ३॥

'तत्र' संहिताविधाने, 'पूर्व्वं पूर्व्वं' पदं सूत्रञ्च, 'प्रथमं' कर्त्तव्यम्। यथा, भद्र आ इहि इत्यत्र दीर्घं समानाक्षर इति दीर्घः(६)। भद्रा इहि इति स्थिते इवर्णपर एकारमित्येकारे कृते भद्रेहीति भवति। अन्यथा एहीति कृत्वा भद्रशब्देन (७) सन्धीयमाने भद्रैहीति स्यात्। तच्चानिष्टं। पूर्व्वपदकर्त्तव्यत्वे एतदुदाहरणम्। पूर्व्वसूत्रकर्त्तव्यत्वेपि वदामः। यथा, षट्

---

१ विज्ञेयत्वविधानादिति ग०।

२ अविचलित इति ग०, इ० मु० च। अविच्छिन्न इति ख०।

३ प्रकृतिसंहितेति क०, ख०, इ० मु० च।

४ महाभाष्यवचने इति ख०। महाभाष्यवचनाच्चेति ग०, इ० मु० च।

५ पठितमिति ख०। पठन्ति इति ग०, इ० मु० च।

६ दीर्घं समानाक्षरे सवर्णपरे इति दीर्घ इति ख०।

७ भद्रशब्दे इति ख०, ग०, इ० मु० च।

त्रियामनिष्पूर्व्वं इति नकारस्य णत्वे कृते उत्तमपर उत्तमश्-सवर्गीयमित्यनेन टकारस्य णत्वे[१] षण्णवत्या इति भवति। अन्यथा उत्तमपर उत्तममिति सूत्रे प्रथमं प्रवृत्ते सति षण् नवत्या इति स्यात्। तच्चानिष्टं। यथा, वट्[२] स्वयमभिगूर्त्तायेत्यत्र टनकार इति पूर्व्वस्य तकारः, प्रथम ऊष्मपर इति[३]सूत्रद्वयं प्रसक्तं। तत्र पूर्व्वत्वात् टनकारपूर्व्व इत्येतदेव[४] कर्त्तव्यं प्रथमं। अन्यथा वषट् स्वाहेति स्यात्[५]। तच्चानिष्टं। अथवा इमं विष्यामीत्यत्र उपसर्गनिष्पूर्व्वोनुदात्ते पदे स्वरपूर्व्वं व्यञ्जनमिति सूत्रं च[६] प्राप्तं। तत्र द्वित्वसूत्रप्राथम्ये[७] विष्यामीति स्यात्। तन्माभूदिति षत्वमेव प्रथमं कर्त्तव्यं। पूर्व्वं पूर्व्वमिति वीप्सा सर्व्वत्रैवमर्थं[८] समर्थयति॥

## त्रपुमिथुपूर्व्वः शकारश्चपरः॥४॥

'त्रपु' 'मिथु' एवम्पूर्व्वः शकारागमो भवति, चकारपरः[९]।

---

१ णत्वे कृते इति इ० मु०। णत्वे सतीति ख०, ग० च।

२ तथा वषट् इति ख०। तथा वट्टेति इ० मु०।

३ ऊष्मपरो द्वितीयमिति ख०, ग०, इ० मु० च।

४ टनकारपूर्व्वस्य तकार इत्येतदेवेति ग०।

५ वट्ठ स्वयमितीति ख०, इ० मु० च।

६ व्यञ्जनं द्विवर्णं व्यञ्जनपरमिति सूत्रद्वयमिति ग०, इ० मु० च। व्यञ्जनमित्यादि सूत्रञ्चेति ख०।

७ द्वित्वसूत्रे प्रथमे कार्ये सतीति ख०, ग०, इ० मु० च।

८ सर्व्वत्रैवमर्थमिति इ० मु०।

९ चपर इति ग०, इ० मु० च।

यथा, सोमश्च मे चपुश्च मे। मिथुश्चरन्तमुपयाति। एवम्पूर्व्व इति किं। विभु च मे प्रभु च मे। एवम्पर इति किं। असिना मिश्रूकः॥

## सुपूर्व्वश्च चन्द्रपरः॥ ५॥

'च'कारः शकारमन्वादिशति। 'सुपूर्व्वः' शकार आगमो भवति, 'चन्द्रपरः'। यथा, सुश्चन्द्रदस्मविश्यते। एवम्पूर्व्व इति किं। प्रचन्द्रमास्तिरति(१)। एवम्पर इति किं। आ मा सुचरिते भज। सु इत्येष शब्दः पूर्व्वो यस्मादसौ सुपूर्व्वः॥

## सम्पूर्व्वः सकारः कुरुपरः॥ ६॥

'सम्' इत्येवम्पूर्व्वः 'सकारः' आगमो भवति, 'कुरुपरः'। यथा, यजमानः संस्कुरुते। एवम्पूर्व्व इति किं। पुरोडाशं कुर्व्वीत (२)। एवम्पर इति किं। संस्कृत्यच्छावाकसामं (३) भवति। कुरुशब्दः परो यस्मादसौ कुरुपरः॥

## अकुर्व्व च प्रत्ययात् परः॥ ७॥

'च'कारः सम्पूर्व्वभागमन्वादिशति(४)। 'अकुर्व्व च' इति

---

१ स्तिरति दीर्घमायुरिति ग०।

२ पुरोडाशं अलं कुर्वितोति ख०, ग० च।

३ संस्कृत्यच्छावाकसाममिति ग०।

४ सम्पूर्वत्वमागमश्चान्वादिशतीति ग०, इ० मु० च। सम्पूर्वत्वमागमत्वं चान्वादिशतीति ख०।

प्रग्रहणे [१] 'प्रत्ययात्' 'परः' सकार आगमो भवति, सम्पूर्व्वः। यथा, त इषुᳫंसमस्कुर्व्वत। प्रत्ययो नाम अकार उच्यते। प्रत्यायन्ते अभिव्यज्यन्ते व्यञ्जनान्यनेनेति प्रत्ययः। सम्पूर्व्व इति किं। अग्निहोत्रं व्रत्तमकुर्व्वत॥

## नीचापूर्व्वो दकार उच्चापरः॥८॥

'नीचापूर्व्वः' 'दकारः' आगमो भवति, 'उच्चापरः'। यथा, मध्यान्नीचादुच्चा स्वधया। एवम्पूर्व्व इति किं। लोकं यन्त्युच्चावचाङ्कि। एवम्पर इति किं। नीचातन्धच्चि। आगमा एते॥

## असम्पूर्वोऽरमृकारः॥९॥

'असम्' इत्येवम्पूर्व्वः' 'ऋकारः' 'अर'विकारमापद्यते। यथा, गृहाणामसमर्त्यै। अत्र[२] निमित्तमेकपदसंस्थं विज्ञेयं। अन्यथा कल्याणी रूपसमृद्धा, वहो ह्येष समृद्धैर, इत्यादावपि भवेत्। ऋकार इति किं। असंतृणेहि[३]॥

## अवग्रह आशीर्धूःसुवरिति रेफं परः सकारः षकारम्॥१०॥

'अवग्रहे' इति सप्तम्यन्तं पदं, 'आशीः'प्रभृतिभिः प्रत्येकमभिसम्बध्यते[४]। आशीः धूः सुवः, इत्येतेष्ववग्रहेषु विसर्ज्जनीयो

---

१ चाकुर्वंच इति प्रग्रहणे इति ग०, इ० मु० च। चाकुर्व इति प्रग्रहणे इति ख०।

२ तवेति ग०, इ० मु० च।

३ असन्तृणेच्चि हन् इति ग०।

४ सम्बध्यते विसर्ग इति क०, ग०, च।

रेफमापद्यते। एभ्यः 'परः' यदि वर्त्तते 'सकारः' तर्हि सोपि 'षकारं' आपद्यते। यथा, इत्याशीर्पदयर्चा। धूर्षाहावनस्रू। सुवर्षाजिह्वामग्ने। अवग्रह इति किं। देव सुवस्थ ते(१)। कखपकार(२) इति अनेन आशीष्पदयेति प्राप्तं। अघोषपरस्तस्य सस्थानमिति धूःसाहौ, सुवःसाहमिति च प्राप्तं॥ तदुभयभङ्गायायमारम्भः। 'इति'शब्द एषामेवैष विशेषो नान्येषामिति प्रकारवाची॥

## अथ लोपः॥ ११॥

'अथ'इत्ययमधिकारः। 'लोपः' इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वच्यामः। अयमधिकारस्तिष्ठन्त्येकयेति(३) सूत्रपर्य्यन्तो मन्तव्यः(४)॥

## ईम्पूर्व्वा मकारः॥ १२॥

'मकारः' 'ईम्' इत्येवम्पूर्व्वो, लुप्यते मकारपरश्चेत्। यथा, ईमन्द्रा सुप्रयस। एवम्पूर्व्वं इति किं। इमं मे वरुण। दीर्घेण किं। अग्निं मित्रं वरुणं। ईमिति पदग्रहणं। इतरथा पृथिवी मा हिꣳसीः इत्यादौ मकारो लुप्यते(५)। तच्चानिष्टं। मकारपर इति किं। ईङ्काराय स्वाहिङ्कृताय।

---

१ देव सुवस्थ ते इममामुष्यायणमिति ख०।

२ कखपकारपर इति ग०, इ० मु० च।

३ तिष्ठन्त्येकया सपूर्वं इति ख०।

४ वेदितव्य इति ग०, इ० मु० च।

५ लुप्येतेति ख०, ग०, इ० मु० च।

## तुनुपूर्व उदात्तयोर्वकारः ॥ १३ ॥

'तु नु' इत्येवम्पूर्व्वो 'वकारः' लुप्यते । तयोः तुन्वोः 'उदात्तयोः' असतोरिति विभज्य विनियोगो विज्ञेयः । यथा, सत्वै यजेत । इन्वा उपस्तीर्णं(१) । उदात्तयोरिति किं । अनुव्रतहत्ये । अप्यकारादिति प्राप्तिः । एवम्पूर्व्व इति किं । इदं वामावास्ये(२) । वकार इति किं । प्र तु जनयति इति । विदुषो नु यज्ञं(३) । तुश्च नुश्च तुनू तौ पूर्व्वौ यस्मात् स तथोक्तः ॥

## उत्पूर्वः सकारो व्यञ्जनपरः ॥ १४ ॥

'व्यञ्जनपरः' 'सकारः' 'उत्पूर्व्वः' लुप्यते । प्रत्युच्चै सयत्वाय । व्यञ्जनमस्मात् परमिति व्यञ्जनपरः । एवम्पूर्व्व इति किम् । जगत्स्था देवाः । सकार इति किं । उत्क्रंस्यते स्वाहा । एवम्पर इति किं । उत्सादेन जिह्वामव ॥

## एषसस्य इति च ॥ १५ ॥

व्यक्तिविषयः(४) 'इति'शब्दः प्रत्येकमेष इत्यादीन् विसर्ज्जनीयान्तान् द्योतयति(५) । 'च'कारो व्यञ्जनमन्वादिशति(६) । एषः सः स्यः, एषु पदेषु विसर्ज्जनीयो व्यञ्जनपरो लुप्यते । यथा,

---

१ उपस्तीर्णमिच्छन्ति इति ख०, ग० च ।

२ वामावास्ये हविरिति ग० ।

३ यज्ञं शृणोतु इति ख० ।

४ व्यक्तिविशिष्टः इति क०, ।

५ तावद् द्योतयतीति ग० ।

६ व्यञ्जनपरतामन्वादिशतीति ग० ।

एष ते गायत्रः। स ते जानाति। एष स्य वाजी। एवम्पर इति किं। इम एवास्यैव उप तिष्ठते। स इधानः॥

## नासः॥ १६॥

'असः' इत्यस्मिन् ग्रहणे, विसर्ज्जनीयः व्यञ्जनपरो 'न' लुप्यते। हृत्स्वसो मयोभूत्। अप्यकारादितिप्राप्तेर्निषेधः॥

## इदिदग्नइमान्नएनौषधीःपरः सः॥ १७॥

इदु इदग्ने इमान्न एना ओषधीः, इत्येवम् 'परः'(१) 'सः' इत्यत्र विसर्ज्जनीयो लुप्यते। यथा, सेदु होता। सेदग्ने अस्तु। इदग्ने इत्येताभ्यां किं। स इज्जनेन। स इद्देवेषु गच्छति। सेमान्नो हव्यदातिं। न इति किं। स इमामभ्यमृशत्। सेनानीकेन। सौषधीरनुरुध्यसे। स इति किं। परो दिवा पर एना॥

## अवग्रह इत्येकम्॥ १८॥

'इति'शब्दविशिष्टे 'एकम्' इत्यस्मिन्, 'अवग्रहे' मकारो लुप्यते। यथा, इत्येकैकं तस्य जुहुयात्। अवग्रह इति किं। इत्येकमयेथ। इतीति किं(२)। यदेकमेकꣳसम्भरेत्॥

---

१ एवम्पर इति ग०, इ० मु० च।

२ इति शब्दविशिष्ट इति किम् इति ग०, इ० मु० च।

## तिष्ठन्त्येकया सपूर्वः॥ १९॥

'तिष्ठन्ति'शब्दविषयविशिष्टे(१) 'एकया' इत्यस्मिन् ग्रहणे अन्त्यो वर्णः 'सपूर्व्वः' पूर्व्वसहितः, लुप्यते। यथा, तिष्ठन्त्येकैकया स्तुतया समायन्ति। तिष्ठन्तीति किं। करोत्येकयैकयोत्सर्गम्। पूर्व्वेण सह वर्त्तत इति सपूर्व्वः॥

## नकारः शकारञ्चपरः॥ २०॥

'च'कार'परः' 'नकारः' 'शकारम्' आपद्यते। यथा, अहीꣳश्च सर्व्वान् जम्भयन्। ऋतूꣳश्च तस्य चत्रियां च। कर्णाꣳश्चाकर्णाꣳश्च। नकार इति किं। शञ्चमे। चपर इति किं। तां छन्दोभिरन्वविन्दत्। चकारः परो यस्मादसौ चपरः॥

## नायन्नैरयन्नार्ध्नुवन्नड्वान्घृणीवान्वारुणानेवास्मिन्॥ २१॥

आयन् ऐरयन् आर्ध्नुवन् अनड्वान् घृणीवान् वारुणान् एवास्मिन्, एषु ग्रहणेषु नकारः शकारं 'न' आपद्यते, च परोऽपि। यथा, लोकमायन् चतस्रः। यामैरयन् चन्द्रमसि। आर्ध्नुवन् चरुणास्मिन्। अनड्वाञ्च मे धेनुश्च मे। घृणीवान् चेतितिल्मना। वारुणान् चतुष्कपालान् निर्वपेत्। एवास्मिन् चक्षुर्धत्तः। एवेति किं। अस्मिꣳश्चामुष्मिꣳश्च॥

## तकारश्चकारꣳ शचछपरः॥ २२॥

'शचछपरस्तकारश्चकारम्' आपद्यते। यथा, तच्छंयोः।

१ शब्दविशिष्टे इति ग०, ह० मु० च।

तच्चादद्रुः। तच्छन्दसाम्। अत्र शचछपर इति सामान्येनोक्तानां (१) निमित्तानां प्रकृतत्वं विज्ञेयम्, मुख्यत्वात्। प्राकृतवैकृतयोः (२) प्राकृतं मुख्यम्। अन्यथा शकारग्रहणवैयर्थ्याच्च (३)। कुतो वैयर्थ्यम्। सवर्णपूर्व्वः शकारश्छकारमिति शकारस्य छत्वे कृते तकारश्चकारं शचछपर इत्येतावतैव सिद्धिरिति ब्रूमः। किञ्च परसूत्रे सति प्रवृत्ते पश्चात् पूर्वसूत्रप्रसरणमरसं। तत्र पूर्व्वं पूर्व्वं प्रथममितिनियमभङ्गप्रसङ्गात्॥

## जपरो जकारम्॥ २३॥

सान्निध्यात्तकार इति लभ्यते। 'जपरः' तकारः 'जकारं' आप्नोति (४)। यथा, तज्जयानां जयत्वम्। एवम्पर इति किं। तत् प्रवाते॥

## नकार एतेषु ञकारम्॥ २४॥

एतेष्वितिबहुवचननिर्द्देशाज्जं प्रत्यासन्नमेवापेक्ष्य (५) सूत्रद्वयस्थेषु परनिमित्तेषु सम्प्रत्ययः। तस्मात् 'एतेषु' इति शचछजेषु परत इत्यर्थः। 'नकारो ञकारम्' आपद्यते। यथा, तेनैवेनाञ्छमयति। शत्वापत्तौ निषिद्धो यो नकारः सोऽत्र चपरत्वेन

---

१ सामान्योक्तानामिति द० मु०।

२ तत्र प्राकृतवैकृतयोरिति ग०, द० मु० च।

३ शकारग्रहणवैयर्थ्यात् इति ग०, द० मु० च।

४ आपद्यते इति ग०, द० मु० च।

५ बहुवचननिर्देशात् प्रत्यासन्नमेवानपेक्ष्येति ग०, द० मु० च।

विषयी क्रियते। लोकमाचचतस्रः। ताञ्छन्दोभिरनु। अप-रूपमात्मञ् जायते। एवम्पर इति किं। तान् स्तब्धान्॥

## लपरौ लकारम्॥२५॥

द्विवचनसामर्थ्यात् गृहीतौ प्रकृतौ तकारनकारौ 'लकारम्'(१) आपद्यते, 'लपरौ'। यथा, यल्लोहितं परापतत्। त्रींल्लोकानु-दजयत्। लकारः परः (२) याभ्यां तौ लपरौ॥

## नकारोऽनुनासिकम्॥२६॥

अनुस्वारोत्तमा अनुनासिका इति नकारस्यानुनासिकत्वे सिद्धे पुनरत्रापि तत्कथनमनुपपन्नं। तस्मादत्र लक्षणया 'नकारः' नाम तत्स्थानी लकार इत्यर्थः। असौ 'अनुनासिकं' भजते। पूर्व्वोक्तमेवोदाहरणम्॥

## मकारः स्पर्शपरस्तस्य सस्थानमनुनासिकम्॥२७॥

'स्पर्शपरः' 'मकारः' 'तस्य' स्पर्शस्य, 'सस्थानमनुनासिकं' भजते। यथा, यं कामयेत। शं चमे। तं तेदुश्चक्षाः। तं प्रत्नथा। समानं स्थानं यस्यासौ सस्थानः, तं। स्पर्शः परो यस्मादसौ स्पर्शपरः॥

## अन्तस्थापरश्च सवर्णमनुनासिकम्॥२८॥

'च'कारो मकारमन्वादिशति। 'अन्तस्थापरः' मकारस्तस्या

---

१ लत्वमिति ग०।

२ लः पर इति ग०, इ० मु० च।

अन्तस्थायाः 'सवर्णं' सदृशम्, 'अनुनासिकम्' अनुनासिकधर्म्म-विशिष्टं, भजते। यथा, संयत्ता आसन्। सुवर्गं लोकम्। संवत्सरः। नन्वनुनासिकमित्यनेन सानुनासिकं कथमुपलभ्या-वहै(१)। उच्यते नितरां परिहारः। यतो धर्म्मवाचकः शब्दो धर्म्मिणमपि कथयति। शुक्लः पटो नीलमुत्पलमित्यादि(२)॥

## न रेफपरः ॥ २९ ॥

अन्तस्थात्वाद्रेफपरस्यापि मकारस्य तत्सवर्णानुनासिका-पत्तिः (३) अनेन प्रतिषिद्ध्यते। 'न' खलु मकारो 'रेफ-परः' पूर्व्वोक्तं भजते। यथा, प्रसम्राजं (४)। साम्राज्याय सुक्रतुः। रेफः परो यस्मादसौ रेफपरः॥

## यवकारपरश्चैकेषामाचार्य्याणां ॥ ३० ॥

'च'कारो निषेधान्वादेशकः। प्रकृतो मकारः 'एकेषा-माचार्य्याणां' पक्षे 'यकारपरः (५) 'वकारपरो वा न सवर्ण-मनुनासिकं भजते। यथा, सम् यत्ताः। संवत्सरः॥

## उत्तमलभावात् पूर्वानुनासिक इत्यात्रेयः ॥ ३१ ॥

'उत्तमस्य नकारस्य वा मकारस्य 'लभावात्' लकारापत्तेः,

---

१ कथं लभ्यते इति ग०, इ० मु० च।

२ इत्यादिवदिति ग०, इ० मु० च।

३ तत्सवर्णानुनासिकप्राप्तिरिति ग०, इ० मु० च।

४ प्रसम्राजं प्रथममध्वराणामिति ग०।

५ यकारपरो वेति ख, ग०, इ० मु० च।

पूर्व्वस्वरः 'अनुनासिकः' भवतीति 'आत्रेयः' नाम मुनिः, मन्यते। यथा, त्रीँल्लोकान्। सुवर्गं लोकं। उत्तमयोर्लभावः उत्तमलभावः, तस्मात्। सूत्रद्वयमेतदनिष्टम्॥

## ङपूर्वः ककारः सषकारपरः॥ ३२॥

'सकारपरः' 'षकारपरः' वा 'ककारः' आगमो भवति, 'ङकार'पूर्वः'। यथा, प्रत्यङ्क् सोमो अतिद्रुतः। प्रत्यङ्क् षड़हः(१)। एवम्पर इति किं। प्रत्यङ् होतारम्। एवम्पूर्व्व इति किम्। तत् सवितुः। यत् षोड़शी (२) गृह्यते॥

## टनकारपूर्वश्च तकारः॥ ३३॥

'च'कारः सषकारावन्वादिशति। 'टकार'पूर्वः' वा 'नकार'पूर्वः' वा 'तकारः' आगमो भवति, सषकारपरः। यथा, वषट्त् स्वाहा। विद्वान्त् सोमेन यजते। अनूयाजो षड्त् षड़नूयाजावनूयाजो षट्। एवम्पर इति किं। षड् वा ऋतवः। तान् रुद्रा अब्रुवन्॥

## स्पर्शपूर्वः शकारश्छकारम्॥ ३४॥

'शकारश्छकारम्' आपद्यते 'स्पर्शपूर्व्वः'। यथा, शरच्छ्रौत्री। एवम्पूर्व्व इति किं। आशुः शिशानः। स्पर्शः पूर्वः यस्मादसौ स्पर्शपूर्वः॥

---

१ प्रत्यङ्क् षड़हो भवतीति ख० ग० च।

२ तत् षोड़शीति ख०, ग० च।

## न मकारपूर्वः ॥ ३५ ॥

'मकारपूर्वः' शकारश्छकारं 'न' आपद्यते। यथा, सᳪंशितं मे ब्रह्म। सᳪंश्रवाह (१)। स्पर्शत्वान् मकारस्य तत्पूर्व्वे शकारे प्राप्तं छत्वमनेन निषिध्यते। नन्वेतदनुपपन्नं। रेफोष्मपरः (२) इति मकारस्य लोपविधानान्न शकारस्य छत्वापत्तिनिमित्तमस्तीति। मैवं। छत्वापादकमलोपसूत्रयोश्छत्वापादकस्यैव पूर्व्वत्वात्तत्र पूर्व्वं पूर्व्वमिति न्यायेन (३) छत्वमेव कर्त्तव्यं स्यात्। तथासति मकारः स्पर्शपरस्तस्येति शकारे छत्वमापन्ने (४) सञ्छितं मे ब्रह्मेति स्यात्। तन्माभूदित्यत्र(५) सूत्रमुपपन्नमेव ॥

## पकारपूर्वस्य वाल्मीकेः ॥ ३६ ॥

'च'कारः प्रतिषेधाकर्षकः (६)। 'वाल्मीकेः' मते 'पकारपूर्वः' शकारश्छत्वं (७) नापद्यते। यथा, अनुष्टुप्शारदी ॥

## व्यञ्जनपरः पौष्करसादेर्न पूर्व्वस्य चकारम् ॥ ३७ ॥

'पौष्करसादेः' मते 'व्यञ्जनपरः' शकारः स्पर्श'पूर्व्वः' अपि छत्वं

---

१ संश्रवाह सौवर्च न स इति ख०।

२ अथ मकारलोपः रेफोष्मपर इति इ० मु०।

३ मैवं छत्वापादकं मलोपापादकात् पूर्वमतस्तत्र पूर्वं पूर्वं प्रथममितिन्यायेनेति इ० मु०।

४ तथासति मकारस्स्पर्शस्तत्परे शकारे छत्वमापन्ने इति इ० मु०।

५ तन्माभूदित्येतदिति ख०, ग०, इ० मु० च।

६ प्रतिषेधार्थक इति इ० मु०।

७ छकारमिति ख, ग, इ० मु० च।

'न' आपद्यते। यकारात् 'पूर्वः' नकारस्य 'अकारं' 'न' आपद्यते। यथा, आदित्यान् श्मश्रुभिः। पापीयान् श्रेयसे। पूर्व्व इत्युक्ते नकार इति कथं लभ्यते, अकारापत्तिरस्येति (१) ब्रूमः। प्रसक्तस्यैव प्रतिषेधः (२)। व्यञ्जनं यस्मात् परमिति व्यञ्जनपरः। नैतत् सूत्रद्वयमिष्टं॥

## प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं प्लाक्षिकौण्डिन्यगौतमपौष्करसादीनां॥ ३८॥

'प्लाक्षिप्रभृतीनां मते 'प्रथमपूर्व्वो हकारः' 'तस्य' प्रथमस्य, 'सस्थानं' 'चतुर्थं' भजते। यथा, अर्वाग्घ्येनं। सरड्ढ वा अश्वस्य। तद्धिरण्यं। एवम्पूर्व्व इति किं। प्रत्यङ् होतारं। हकार इति किं। वाक्त आप्यायतां वषट्ते (३)। तत्ते। प्रथमः पूर्व्वो यस्मादसौ प्रथमपूर्व्वः॥

## अविकृत एकेषाम्॥ ३९॥

'एकेषां' मते प्रथमपूर्व्वो हकारः 'अविकृतः' भवति। यथा, अर्व्वाग् ह्येनं॥

## चतुर्थोऽन्तरे शैत्यायनादीनां॥ ४०॥

'शैत्यायनादीनां' मते हकारप्रथमयोः 'अन्तरे' मध्ये, प्रथम-

---

१ अकारापत्तिरस्यैवेति ख०, ग०, इ० मु० च।

२ प्रसक्तस्यैव हि प्रतिषेधात् इति इ० मु०।

३ वषट ते विष्णो इति ख०।

सस्थानः 'चतुर्थः' आगमो (१) भवति। यथा, अर्वाग्घ्येनं परैः। आदिशब्देन कौहलीपुत्रभरद्वाजस्थविरकौण्डिन्यपौष्कर-सादयो गृह्यन्ते॥

## मीमाꣳसकानां च मीमाꣳसाकानाञ्च॥४१॥

'च'कारः पूर्व्वोक्तमन्वादिशति (२)। 'मीमांसकानां' चानन्तरातीतं मतं सम्मतं। पूर्व्वमेवोक्तमुदाहरणं। मीमांसकानां पूजार्थं पृथक् सूत्रारम्भः। नैतत् सूत्रत्रय-मिष्टम्॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे पञ्चमोऽध्यायः॥५॥

---

अथ षष्ठोध्यायः।

## अथ षकारं सकारविसर्जनीयौ॥१॥

'अथ' इत्ययमधिकारः। 'सकारविसर्ज्जनीयौ' 'षकारम्' आपद्यत इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः।

---

१ चतुर्थागम इति ग०, इ० मु० च।

२ पर्वोक्तविधिमन्वादिशति इति ख०, ग०, इ० मु० च।

## स्वानासोदिव्यापोह्ययमुकमू-मो-प्रो-त्री-महि-द्यवि-पद्य-वग्रहपूर्वः ॥ २ ॥

स्वानासोदिवि आपोहि अयमु कमु ऊ मो प्रो त्री महि द्यवि पदि, इत्येवम्पूर्व्वोवग्रहपूर्व्वश्च सकारः षकारमापद्यते। यथा, उत स्वानासो दिवि षन्तु(१)। स्वानास इति किं। तृतीयस्यामितो दिवि सोम आसीत्। आपो हि ष्ठा मयोभुवः। आप इति किं। न हि स्वस्वः हिनस्ति। अयमुष्य प्रदेवयुः। कमुष्विदस्य सेनया। अयं कमिति किं। तदु सोम आह। ऊषुण ऊतये (२)। मोषूण इन्द्र। प्रोष्वस्मै (३)। त्रीषधस्था। महिषद्युमत्तमः। य उपद्यविष्ठ। पदिषितां (४)। शुचिषदसुः। अयाविष्ठा जनयन् गोष्टोमं द्वितीयं। अवग्रहः पूर्व्वो यस्मादसौ अवग्रहपूर्वः॥

## असद्मामासिञ्चꣳश्च ॥ ३ ॥

असद्म, असिञ्चन्, इत्येतयोः सकारः षकारमापद्यते। यथा, येन कामेन न्यषद्मेति। मित्रावरुणावभ्यषिञ्चन्। 'च'कारोवग्रहपूर्व्वत्वान्वादेशकः। अन्वादेशेन किं। अजायां घर्म्मं प्रासिञ्चन्। अवग्रहपूर्व्वत्वेप्यकारेण व्यवेत इत्ययमारम्भः।

---

१ षन्त्वग्ने इति ग०।

२ ऊर्ध्वं ऊषुण ऊतये इति ख०।

३ प्रोष्वस्मै पुरोरथमिति ख०, ग० च।

४ पदिषितामसुञ्चता यजत्रेति ख०, ग०, च।

ननु, लाघवादकारव्यवेतोपीत्येतावतैवालम्, कण्ठोक्त्या किं। उच्यते, हृत्स्वसो मयोभूत् इत्यादौ माभूदिति॥

## उपसर्गनिष्पूर्व्वोऽनुदात्ते पदे ॥ ४ ॥

सर्व्वानुदात्ते 'पदे' वर्त्तमानः सकारः 'उपसर्गनिष्पूर्व्वः' वा(१) षत्वमापद्यते(२)। यथा, अश्मनूर्ज्जमिति परिषिञ्चति। इमं विष्यामि। साम्राज्येनाभिषिञ्चामि(३)। यजमाने प्रतिष्ठापयन्ति। निषसाद धृतव्रतः(४)। एतान्युपसर्गपूर्व्वाणि। निष्पूर्व्वं(५) यथा, निष्टनिहि दुरिता। एवम्पूर्व्वं इति किं। सदने सीद(६)। बृहतः शर्म्मणि स्यां। सर्व्वानुदात्त इति किं। विसीमतः(७)। अभिसवना पाहि। पद इति किं। कालार्थं। पदकाले अनुदात्त इत्यर्थः॥

## रासःसप्तेऽग्निर्निर्विदुर्मीढुःपायुभिर्वेःसुमतिर्माकिरीयुरायुराभिःसधिर्नकिस्तकारपरो नित्यं ॥ ५ ॥

रासः सप्ते इत्येताभ्यां विशिष्टे अग्निरित्यस्मिन् ग्रहणे निः विदुः मीढुः पायुभिः वेः सुमतिः माकिः ईयुः आयुः

---

१ उपसर्गपूर्वो निष्पूर्वो वेति ख०, ग०, इ० मु० च।

२ षकारमापद्यते इति ख०।

३ अभिषिञ्चतीति ग०।

४ धृतव्रतो वरुण इति ग०।

५ निष्पूर्वमपीति ग०।

६ सीद समुद्रे इति ख०, ग० च।

७ विसीमतः सुरुच इति ख०, ग०, च।

आभिः सधिः नकिः, इत्येतेषु च विसर्जनीयः 'तकारपरः' षकारं 'नित्यं' आपद्यते। यथा, अविदुष्टरासः । अग्निष्टत् (१) । मेध्यश्च सप्ते अग्निष्टा । एताभ्यां विशिष्ट इति किं। नाकेऽग्निस्ते तनुवं। निष्टपामि गोष्ठं। विदुष्टरꣳ सपेम । अप्यकारादितिवचनादविदुष्टरास इत्युदाहरणं(२)। मीढुष्टम शिवतम । पायुभिष्टा शिवेभिः । पायुिति किं । त्रिभिस्तिष्ठꣳस्तिष्ठति । शोचे वेष्टꣳ हि यज्वा । सुमतिष्टे अस्तु । स्विति किं । प्रमितिस्ते देवानामिति शाखान्तरे । माकिष्टे व्यथिराधर्षीत् । ईयुष्टे पूर्व्वतरां(३)। आयुष्ट आयुर्दाः(४)। आभिष्टे अद्य(५)। अप्स्वग्ने सधिष्टव । नकिष्टं घ्नन्ति । 'नित्य'शब्दः किमर्थः । ऋकाररेफवति अवग्रहप्रतिषेधं (६) वक्ष्यति । अविदुरित्यत्र विसर्जनीयस्यावग्रहस्थत्वात् षत्वं नस्यात्तन्माभूदिति कण्ठोक्तिरपि विदुरित्यस्यैव न त्वविदुरित्यस्येति दौर्बल्यात् । तत्सङ्ग्रहणार्थो नित्यशब्द उपयुज्यते (७)। अघोषपरस्तस्य सस्थानमित्यस्य पुरस्तादपवादोऽयं ॥

---

१ अग्निष्टद्विश्वमिति ख०, ग०, च।

२ इत्यप्युदाहरणमिति ख०, ग०, इ० मु० च ।

३ पूर्वतरामपश्यन् इति ग० ।

४ आयुर्द्दा अग्ने इति ख० ।

५ अद्य गौभिरिति ख०, ग०, च ।

६ तकारपूर्वो नित्यं तकारपूर्वत्वात्, तकारात् पर इति निमित्तयोर्नित्यशब्दः । अवग्रह इति निषेधमिति ग०, इ० मु० च । अवग्रह इति प्रतिषेधमिति ख० ।

७ प्रयुज्यते इति ख०, ग०, इ० मु० च ।

अथ न ॥ ६ ॥

'अथ' इत्ययमधिकारः। 'न' इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः ॥

अवर्णव्यञ्जनशकुनिपत्न्यृतुमृत्युमलिम्लुबृहस्पतिपूर्वः ॥ ७ ॥

'अवर्ण'पूर्व्वो 'व्यञ्जन'पूर्व्वश्च शकुनि पत्नी ऋतु मृत्यु मलिम्लु बृहस्पति, इत्येवम्पूर्व्वश्च सकारः षकारं नापद्यते। यथा, अन्तरिक्षसम् (१)। अवग्रहपूर्व्वत्वात् प्राप्तिः। आसिञ्चस्व। उपसर्गपूर्व्वत्वात् प्राप्तिः। ऋक्सामे वै। शकुनिसादेन रथं। पत्नीसंयाजानुप (२)। ऋतुस्था स्तस्य (३)। मृत्युसंयुत इव। नैनं मलिम्लुसेना विन्दति। बृहस्पतिसुतस्य ते। अवग्रहपूर्व्वत्वादेषां प्राप्तिः ॥

ऋकाररेफवति ॥ ८ ॥

ऋकारश्च रेफश्च ऋकाररेफौ, तावस्मिन् स्त इति ऋकाररेफवत् तस्मिन् पदे वर्त्तमानः सकारः षकारं नापद्यते। यथा, विसृजते शान्त्यै। उपसर्गपूर्व्वत्वात् प्राप्तिः। तस्मात् सविस्रस्यः। अवग्रहपूर्व्वत्वात् प्राप्तिः ॥

अवग्रहः ॥ ९ ॥

'अवग्रह'स्थः, सकारः षकारं ना पद्यते, उपसर्गपूर्वश्च।

---

१ दुरोणसत्। आसाद्याग्निं मन्थति इति ख०, चिह्नितपुस्तकेऽधिकः पाठः।

२ पत्नीसंयाजा ऋचमनूच्येति ख०।

३ ऋतस्थास्तस्य वसन्त इति ख०।

अवग्रह इत्यवग्रहस्थो लभ्यते। मञ्चाः क्रोशन्तीत्यत्र मञ्चस्था यथा। यथाच स्थूलो जानातीति स्थूलदेहस्थः। उदाहरणानि। तस्यां देवा अधिसंवसन्तः। अभिसमगच्छन्तेति। यज्ञानामभि-संविदाने॥

## सवस्थानं॥ १०॥

'सव' 'स्थानं' इत्येतयोः सकारः षकारं नापद्यते। सवेति। पदैकदेशो बहूनां पदानामर्थः (१)। यथा, अग्निसवश्चित्यः। अनुसवनं पुरोडाशानां (२)। सवने सवनेभिगृह्णाति। प्रसवाय सावित्रः। गच्छ गोस्थानं॥

## न धिपूर्वे॥ ११॥

सवः स्थानमित्येतयोः सकारे 'धिपूर्व्वे' निषेधः 'न' प्रसरति। यथा, अधिषवणमसि। अधिषवणे जिह्वा। अधिष्ठानमारम्भणम्। धीत्ययं वर्णः पूर्व्वो यस्मादसौ धिपूर्व्वः, तस्मिन्॥

## सन्तानेभ्यःसप्ताभिःसम्मिताꣳस्तनाꣳसीतꣳस्पशःसक्सनिस्सनिःसनीःसभेयःसत्त्वासस्यायै॥ १२॥

सन्तानेभ्यः सप्ताभिः सम्मितां स्तनां सीतं स्पशः सक सनिसनिः सनीः सभेयः सत्त्वा सस्यायै, एतेषु सकारः षकारन्नापद्यते। यथा, परिसन्तानेभ्यः स्वाहा। त्रिसप्ताभिः पशुकामस्य। वेदिसम्मितां मिनोति। द्विस्तनां करोति। अनुसीतं वपति।

---

१ बहुपदानामर्थ इति ख०, इ० मु० च।

२ पुरोडाशा इति ग०।

तनूपातः प्रतिस्यग्रः। सगिति पदैकदेशो बह्ननाम् (१)। यथा, पश्चात् पृश्निसक्थो भवति। पृश्निसक्थास्त्रयो हैमन्तिकाः। पृश्निसक्थमालभेत (२)। पृश्निसक्थाय स्वाहा। तस्मादेतन्नोसनि। असिस्तनयित्नुसनिरसि। वृष्टिसनीरुपदधाति। सन्नित्येतावतैव सिद्धे किमखिलपदपाठेन। मृधा वा एषोभिषणः, निषसाय स्वाहा, इत्यादौ माभूदिति। सुसभेयो य एवम्। अभिस त्वा सहोजाः। सुसस्यायै सुपिप्पलाभ्यस्त्वौषधीभ्यः। सन्तानिभ्यः सत्त्वा इत्येतयोरुपसर्गपूर्व्वत्वात् प्राप्तिः। सर्व्वेषामन्येषामवग्रहपूर्व्वत्वात्॥

न स्वरस्पर्द्धास्तरोमसाहस्रसारथिस्फुरन्तीस्तुब्ज्योतिरायुश्चतुःपूर्वस्तोः॥ १३॥

स्वर स्पर्द्धा स्तरोम साहस्र सारथि स्फुरन्ती स्तुप्, इत्येतेषु सकारः ज्योतिः आयुः चतुः, एवम्पूर्वस्य 'स्तो' इत्यत्र सकारः ऋकाररेफवति अवर्णव्यञ्जन इति चोक्तं निषेधं 'न' आपद्यते, किन्तु षत्वं प्रतिपद्यत इति प्रतिप्रसवार्थोयं 'न'कारः। यथा, अवनिष्वरा। विष्पर्द्धा च्छन्दः। उपसर्गपूर्वत्वादनयोः प्राप्तिः। सुष्टरीमा जुषाणा। ग्रहणस्य चेदिति वचनादकारग्टहीतं साहस्रमनेकार्थम्। यथा, त्रिषाहस्रं चिन्वीत। द्विषाहस्रो वा असौ (३)। कामयते सुषारथिः। विष्फुरन्तो अमित्रान्। सुष्टुप् छन्दः।

१ बह्नपादानार्थं इति इ० मु० ख०, च। बह्ननां पदानामिति ग०।

२ पृश्निसक्थमालभेत ग्रामकाम इति ख०।

३ असौ लोक इति ग०।

ज्योतिष्टोमं प्रथमम्। आयुष्टोमं तृतीयमुपयन्ति। चतुष्टोमो भवेत्। स्तरीमादीनामेषामवग्रहपूर्वत्वात् प्राप्तिः। ज्योतिरादिपूर्वत्वेन किं। यद् अच्णया स्तोमीयाः। स्तौ इति किं। चतुस्तनां करोति। ज्योतिस्त्वा अस्याः॥

**तर्ह्यांꣳस्तस्मिंल्लोकान्विद्वाꣳस्ताꣳस्त्रीन्युष्मानूर्द्ध्वान्त्र्यम्बकानृतूनश्मन्कृण्वन्पितॄननान्कपालाꣳस्तिष्ठन्नाद्युदात्ते नेमिर्देवान्त्सवनेपशूंस्तकारपरः सकारं प्राकृतो नित्ये प्राकृतो नित्ये॥ १४॥**

तर्ह्यान् तस्मिन् लोकान् विद्वान् तान् त्रीन् युष्मान् ऊर्द्ध्वान् त्र्यम्बकान् ऋतून् अश्मन् कृण्वन् पितॄन् अनान् कपालान् तिष्ठन् 'आद्युदात्ते' 'तिष्ठन्' ग्रहणे, नेमिर्देवान् सवनेपशून्, एतेषु ग्रहणेषु 'प्राकृतः' नकारः 'नित्ये' पदे, वर्त्तमानः 'तकारपरः' 'सकारम्' आपद्यते। यथा, शततर्ह्यांꣳस्तृहन्ति। तस्मिंस्त्वादधामि। इमानेव लोकाꣳस्तीर्त्वा। विद्वांस्त्रैधातवीयेन यजेत। ताꣳस्ते दधामि जम्भयोः। त्रीꣳस्तृचाननु। युष्माꣳस्तेनु। ऊर्द्ध्वाꣳस्तानुपब्दिमतः। त्र्यम्बकाꣳस्तृतीयसवनम्(१)। ऋतूꣳस्तन्वते(२)। अश्मꣳस्ते क्षुत्। पुनः कृण्वꣳस्त्वा(३)। पितॄꣳस्तन्तुरिति(४)।

---

१ सवनमकुर्वतेति ख०, ग०, च।

२ ऋतूꣳस्तन्वते कवय इति ख०। ऋतूꣳस्तन्वते कवयः प्रजानतीरिति ग०।

३ कृण्वꣳस्त्वा पितरमिति ग०।

४ पितॄꣳस्तन्तुरिति प्रजा इति ख०।

प्राणाꣳस्तस्मात्तपन्ति । अपिविकृतमितिवचनादेतद्भवति । द्वादशकपालाꣳस्तृतीयसवने । त्रिभिस्तिष्ठꣳस्तिष्ठति । आद्युदात्त इति किं । न प्रत्यतिष्ठन्तावसुकोसि । अप्यकारादिति प्राप्तिः । नेमिर्देवाꣳस्त्वं परिभूरसि । नेमिरिति किं । जातवेदो वपया गच्छ देवान् त्वꣳहि । मध्यन्दिने सवने पशूꣳस्तृतीयसवने । सवन इति किं । प्रजां पशून्तेनावर्द्धत । तकारपर इति किं । तस्मिन् प्रजापतिः (१) । प्राकृत इति किं । तान् प्रेरय । प्राकृतोयं नकारो मकारस्पर्शपर इति प्राप्तत्वात् । नित्ये तकारऽत किं । विद्वान् सोमेन यजते । अनित्योयन्तकारः । यतः पदसमये नास्ति । तकारः परो यस्मादसौ, तथोक्तः ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

### अथ नकारो णकारं ॥ १ ॥

अथेत्यधिकारः । नकारो णकार इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः ।

### पुषूक्षुधिसुवःसमिन्द्रास्थूर्युरुवाःषट्त्रिग्रामनिष्पूर्व्वः ॥ २॥

पुषू क्षुधिसुवः समिन्द्रः अस्थूरि उरुवाः षट् त्रिः ग्राम,

१ प्रजापतिर्लोकान् द्रविणावतः कुरुते इति ख०, चिह्नितपुस्तके धिकः पाठः ।

निः, एवम्पूर्व्वो नकारो णकारमापद्यते। यथा, ऊर्ज्जं ऊषुण ऊतये। इन्द्रो धर्त्ता गृहेष्वित्यत्र णत्वं न भवति, पदग्रहणेष्विति-वचनात्। मोषूण इन्द्र। सुसू इत्येतयोर्यदा षत्वं नास्ति तदा णत्वनिषेधार्थम्। वैकृतग्रहणं यथा, सुन ऊतये। सून इन्द्रः। ब्रह्मणा कृधि सुवर्ण शुक्रं। कृधीति किं। सुवर्न शुक्र स्वाहा। समिन्द्र णो मनसा। समिति किं। वर्त्तयेन्द्र नड्वद। अस्थूरिणो गार्हपत्यानि सन्तु। उरुणस्कृधि। तस्मा-हार्णाम वो हितं। षस्वत्यै स्वाहा। त्रिणवस्तोमो वसूनां। ग्रामणीयं प्राप्नुवन्ति(१)। निर्णिनिजति ततोऽधि। विसर्गेण किं। निर्नो रयिं सुभोजसं॥

## हन्यादुप्यमानञ्च॥ ३॥

चकारो निष्पूर्व्वत्वमन्वादिशति। निःशब्दोत्तरयोर्हन्यादुप्य-मानमित्येतयोर्ग्रहणयोर्नकारो णकारमापद्यते। यथा, योनिं गर्भं निर्हण्यात्। निरुप्यमाणमभिमन्त्रयेत। अन्वादेशः किमर्थः। न निर्हन्यान्न लोहितं(२)।

## पारोपरिपरीप्रपूर्व्वः॥ ४॥

पारो परि परी प्र, एवम्पूर्व्वो नकारो णकारमापद्यते। यथा, पारो णत्र्यशंसे। परि णो रुद्रस्य(३)। वीरवन्तं परीणसं। प्रणो देवी सरस्वती॥

---

१ ग्रामणी राजन्य इति ग०।

२ लोहितं कुर्य्यादिति ख०, ग० च।

३ रुद्रस्य हेतिरिति ख०।

## अवर्णव्यवेतोऽपि ॥ ५ ॥

अपिशब्दः पर्य्याद्यन्वादेशकः(१)। पर्य्यादिपूर्व्वो नकारोऽवर्णव्यवहितोपि(२) णत्वं भजते। यथा, अग्रं पर्य्यणयन्(३)। पर्य्यणीयाहवनीयस्य। प्राणाय स्वाहा। अनुप्राण्यात्(४)। अवर्णव्यवेत इति किं। परिमिनुयात्(५)। प्रमिनाम व्रतानि।

## वाहनउह्यमानीयानमयन्यवेनवत्सु ॥ ६ ॥

वाहनः, उह्यमानः, यानं, अयन्, यवेन, वन्, एषु(६) ग्रहणेषु चकारात्सष्टप्रपूर्व्वेषु(७) नकारो णत्वं भजते। यथा, प्रवाहणो वह्निरसि(८)। प्रेति किं। परिमिनुयात्। प्रोह्यमाणोऽधिपतिः(९)। प्रयाणमन्वन्त्ये(१०)। अयन्निति पदैकदेशो बहूपादानार्थः। तस्मादादित्यः प्रायणीयः। प्रायणीयं कार्य्यं। प्रायणमेषा प्रतिष्ठा(११)। प्रायणीयस्य पुरोऽनुवाक्याः। प्रणी-

---

१ पर्य्याद्यन्वादिशतीति ग०, ङ० मु० च।

२ अवर्णव्यवेतोपीति ग०, ङ० मु० च।

३ अग्रं पर्य्यणयतेति ख०।

४ अनुप्राण्यात् प्रथमामिति ख०। प्राण्यात् प्रथमामिति ग०।

५ परिमिनुयात् सप्तेति ख०।

६ एतेष्विति ख०, ग०, ङ० मु० च।

७ चकारात्सष्टपूर्वेष्विति ग०, ङ० मु० च।

८ प्रवाहणे वह्निरिति ग०।

९ प्रोह्यमाणेधिपतिरिति ग०।

१० प्रयाणमन्वन्यदित्ययुरिति ग०। यस्य प्रयाणमन्वय इत्ययुरिति ख०।

११ योवै यज्ञस्य प्रायणं प्रतिष्ठामिति ख०।

येरन्(१)। वन्निति पदैकदेशो बहुपादानार्थः। प्रयवेण पश्च(२)। यदि वा तावत् प्रवणं(३)। अन्वादेशेन किं। असि हव्यवाहनः। उदयनं वेद॥

## प्रापूर्व्वश्च॥७॥

चकाराल्लष्टवन्नित्यत्र ग्रहणे(४) नकारः प्रा इत्येवम्पूर्व्वो णकारं भजते(५)। यथा, प्रावणेभिः सजोषसः॥

## इन्द्रोऽयजुःपूर्व एनंकेन॥८॥

इन्द्रः, अयजुः, इत्येवम्पूर्वयोरेनं केन इत्येतयोर्नकारो णत्वं भजते। यथा, इन्द्र एणं प्रथमः। अयजुष्केण क्रियते। एवम्पूर्व इति किं। रुद्र एनं भूत्वा। ब्रह्मवादिनः केन(६)। एनं केनेति किं। इन्द्रो नेषदति(७)॥

## नृश्रोपूर्वो मनाः॥९॥

नृ श्री इत्येवम्पूर्व्वो मना इत्येवं नकारो णकारं(८) भजते।

---

१ प्राथणीयेष्वन्निति ख०, ग० च।

२ तामानुपयन्ति प्रयवेणेति ख०।

३ आहवनीयात् प्रवणां स्यादिति ग,-चिह्नितपुस्तकेधिकः पाठः।

४ चकाराल्लष्टवन्नितिग्रहणे इति ग०।
चकाराल्लष्टे वन्नितिग्रहणे इति ह० मु०।

५ णत्वं भजते इति ख०, ग०, ह० मु० च।

६ केन तद्जाप्नोति ख०, ग० च।

७ नेषदतिदुरितानि विश्वा इति ख०।

८ णत्वमिति ख०, ग०, ह०मु० च।

ननु, लाघवादकारव्यवेतोपीत्येतावतैवालम्, कण्ठोक्त्या किं। उच्यते, हृत्सुखसो मयोभूत् इत्यादौ माभूदिति॥

## उपसर्गनिष्पूर्व्वोऽनुदात्ते पदे॥४॥

सर्व्वानुदात्ते 'पदे' वर्त्तमानः सकारः 'उपसर्गनिष्पूर्व्वः' वा(१) षत्वमापद्यते(२)। यथा, अभ्रमनूर्ज्जमिति परिषिञ्चति। इमं वि-ष्यामि। साम्राज्येनाभिषिञ्चामि(३)। यजमाने प्रतिष्ठापयन्ति। निषसाद धृतव्रतः(४)। एतान्युपसर्गपूर्व्वाणि। निष्पूर्व्वं(५) यथा, निष्टनिह्नि दुरिता। एवम्पूर्व्वं इति किं। सदने सीद(६)। वृहतः शर्म्मणि स्यां। सर्व्वानुदात्त इति किं। विसीमतः(७)। अभिसवना पाहि। पद इति किं। कालार्थं। पदकाले अनुदात्त इत्यर्थः॥

## रासःसप्नेऽग्निर्निर्विदुर्मीढुःपायुभिर्वेःसुमतिर्माकिरीयुरा-युराभिःसधिर्नकिस्तकारपरो नित्यं॥५॥

रासः सप्ने इत्येताभ्यां विशिष्टे अग्निरित्यस्मिन् ग्रहणे निः विदुः मीढुः पायुभिः वेः सुमतिः माकिः ईयुः आयुः

१ उपसर्गपूर्वो निष्पूर्वो वेति ख०, ग०, ङ० सु० च।

२ षकारमापद्यते इति ख०।

३ अभिषिञ्चमीति ग०।

४ धृतव्रतो वरुण इति ग०।

५ निष्पूर्वमपीति ग०।

६ सीद समुद्रे इति ख०, ग० च।

७ विसीमतः सुरुच इति ख०, ग०, च।

आभिः सधिः नकिः, इत्येतेषु च विसर्जनीयः 'तकारपरः' षकारं 'नित्यं' आपद्यते। यथा, अविदुष्टरासः । अग्निष्टत्(१) । मेध्यश्च सप्त अग्निष्टा । एताभ्यां विशिष्ट इति किं । नाकेऽग्निस्ते तनुवं । निष्टपामि गोष्ठं । विदुष्टरꣳ सपेम । अप्यकारादितिवचनादविदुष्टरास इत्युदाहरणं(२) । मीढुष्टम शिवतम । पायुभिष्टा शिवेभिः । पायुिति किं । त्रिभिस्तिष्ठꣳस्तिष्ठति । शोचि वेष्टꣳ हि यज्वा । सुमतिष्टे अस्तु । स्विति किं । प्रमितिस्ते देवानामिति शाखान्तरे । माकिष्टे व्यथिराधर्षीत् । ईयुष्टे पूर्व्वतरां(३) । आयुष्ट आयुर्दाः(४) । आभिष्टे अद्य(५) । अप्स्वग्ने सधिष्टव । नकिष्टं घ्नन्ति । 'नित्य'शब्दः किमर्थः । ऋकाररेफवति अवग्रहप्रतिषेधं (६) वक्ष्यति । अविदुरित्यत्र विसर्जनीयस्यावग्रहस्थत्वात् षत्वं नस्यात्तन्माभूदिति कण्ठोक्तिरपि विदुरित्यस्यैव न त्वविदुरित्यस्येति दौर्बल्यात् । तत्सङ्ग्रहणार्थो नित्यशब्द उपयुज्यते (७) । अघोषपरस्तस्य सस्थानमित्यस्य पुरस्तादपवादोऽयं ॥

---

१ अग्निष्टद्विश्वमिति ख०, ग०, घ ।

२ इत्यप्युदाहरणमिति ख०, ग०, इ० मु० घ ।

३ पूर्वतरामपश्यन् इति ग० ।

४ आयुर्दा अग्ने इति ख० ।

५ अद्य गीर्भिरिति ख०, ग०, घ ।

६ तकारपूर्वो नित्यं तकारपूर्वत्वात्, तकारात् पर इति निमित्तयोर्नित्यशब्दः । अवग्रह इति निषेधमिति ग०, इ० मु० घ । अवग्रह इति प्रतिषेधमिति ख० ।

७ प्रयुज्यते इति ख०, ग०, इ० मु० घ ।

**अथ न ॥ ६ ॥**

'अथ' इत्ययमधिकारः। 'न' इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः ॥

**अवर्णव्यञ्जनशकुनिपत्न्यृतुमृत्युमलिम्लुबृहस्पतिपूर्वः ॥ ७ ॥**

'अवर्ण'पूर्व्वो 'व्यञ्जन'पूर्व्वश्च शकुनि पत्नी ऋतु मृत्यु मलिम्लु बृहस्पति, इत्येवम्पूर्व्वश्च सकारः षकारं नापद्यते। यथा, अन्तरिक्षसम् (१)। अवग्रहपूर्व्वत्वात् प्राप्तिः। आसिञ्चस्व। उपसर्गपूर्व्वत्वात् प्राप्तिः। ऋक्सामे वै। शकुनिसादेन रथं। पत्नीसंयाजानुप (२)। ऋतुस्था स्तस्य (३)। मृत्युसंयुत इव। नैनं मलिम्लुसेना विन्दति। बृहस्पतिसुतस्य ते। अवग्रहपूर्वत्वादेषां प्राप्तिः ॥

**ऋकाररेफवति ॥ ८ ॥**

ऋकारश्च रेफश्च ऋकाररेफौ, तावस्मिन् स्त इति ऋकाररेफवत् तस्मिन् पदे वर्त्तमानः सकारः षकारं नापद्यते। यथा, विसृजते शान्त्यै। उपसर्गपूर्वत्वात् प्राप्तिः। तस्मात् सविस्रस्यः। अवग्रहपूर्व्वत्वात् प्राप्तिः ॥

**अवग्रहः ॥ ९ ॥**

'अवग्रह'स्थः, सकारः षकारं ना पद्यते, उपसर्गपूर्वश्च।

---

१ दुरोणसत्। आसाद्याग्निं मन्यति इति ख०, चिह्नितपुस्तकेऽधिकः पाठः।

२ पत्नीसंयाजा ऋचमनूच्येति ख०।

३ ऋतस्थास्तस्य वसन्त इति ख०।

अवग्रह इत्यवग्रहस्थो लभ्यते। मन्त्राः क्रोशन्तीत्यत्र मन्त्रस्था यथा। यथाच स्थूलो जानातीति स्थूलदेहस्थः। उदाहरणानि। तस्यां देवा अधिसंवसन्तः। अभिसमगच्छन्तेति। यज्ञानामभिसंविदाने॥

## सवस्थानं॥१०॥

'सव' 'स्थानं' इत्येतयोः सकारः षकारं नापद्यते। सवेति। पदैकदेशो बहूनां पदानामर्थः (१)। यथा, अग्निसवश्चित्यः। अनुसवनं पुरोडाशानां (२)। सवने सवनेभिगृह्णाति। प्रसवाय सावित्रः। गच्छ गोस्थानं॥

## न धिपूर्वे॥११॥

सवः स्थानमित्येतयोः सकारे 'धिपूर्व्वे' निषेधः 'न' प्रसरति। यथा, अधिषवणमसि। अधिषवणे जिह्वा। अधिष्ठानमारम्भणम्। धोत्ययं वर्णः पूर्व्वो यस्मादसौ धिपूर्व्वः, तस्मिन्॥

## सन्तानेभ्यःसप्ताभिःसम्मिताᳪस्तनाᳪसीतᳪस्पशःसक् सनिसनिःसनीःसभेयःसत्त्वासस्यायै॥१२॥

सन्तानेभ्यः सप्ताभिः सम्मितां स्तनां सीतं स्पशः सक सनिसनिः सनीः सभेयः सत्त्वा सस्यायै, एतेषु सकारः षकारन्नापद्यते। यथा, परिसन्तानेभ्यः स्वाहा। त्रिसप्ताभिः पशुकामस्य। वेदिसम्मितां मिनोति। द्विस्तनां करोति। अनुसीतं वपति।

---

१ बहुपदानामर्थ इति ख०, इ० मु० च।

२ पुरोडाशा इति ग०।

तनूपातः प्रतिस्नग्नः। सगिति पदैकदेशो बहूनाम् (१)। यथा, पश्चात् पृश्निसक्थो भवति। पृश्निसक्थास्त्रयो हैमन्तिकाः। पृश्निसक्थमालभेत (२)। पृश्निसक्थाय स्वाहा। तस्मादेतद्रोसनि। असिस्तनयित्नुसनिरसि। वृष्टिसनीरुपदधाति। सन्नित्येतावतैव सिद्धे किमखिलपदपाठेन। मृधा वा एषोभिषण्ः, निषण्णाय स्वाहा, इत्यादौ माभूदिति। सुसमेयो य एवम्। अभिस त्वा सहोजाः। सुसस्यायै सुपिप्पलाभ्यस्त्वौषधीभ्यः। सन्तानिभ्यः सत्त्वा इत्येतयोरुपसर्गपूर्व्वत्वात् प्राप्तिः। सर्व्वेषामन्येषामवग्रहपूर्व्वत्वात्॥

**न स्वरस्पर्द्धास्तरीमसाहस्रसारथिस्फुरन्तीस्तुब्ज्योतिरायुश्चतुःपूर्वस्तोः॥ १३॥**

स्वर स्पर्द्धा स्तरीम साहस्र सारथि स्फुरन्ती स्तुप्, इत्येतेषु सकारः ज्योतिः आयुः चतुः, एवम्पूर्वश्च 'स्तो' इत्यत्र सकारः ऋकाररेफवति अवर्णव्यञ्जन इति चोक्तं निषेधं 'न' आपद्यते, किन्तु षत्वं प्रतिपद्यत इति प्रतिप्रसवार्थीयं 'न'कारः। यथा, अवनिष्वरा। विष्पर्द्धा च्छन्दः। उपसर्गपूर्वत्वादनयोः प्राप्तिः। सुष्टरीमा जुषाणा। ग्रहणस्य चेदिति वचनादकारगृहीतं साहस्रमनेकार्थम्। यथा, त्रिषाहस्रं चिन्वीत। द्विषाहस्रो वा असौ (३)। कामयते सुषारथिः। विष्फुरन्तो अमित्रान्। सुष्टुप् छन्दः।

---

१ बहुपादानार्थं इति ह० मु० ख०, च। बहूनां पदानामिति ग०।

२ पृश्निसक्थमालभेत ग्रामकाम इति ख०।

३ असौ लोक इति ग०।

ज्योतिष्टोमं प्रथमम्। आयुष्टोमं तृतीयमुपयन्ति। चतुष्टोमो भवेत्। स्तरीमादीनामेषामवग्रहपूर्वत्वात् प्राप्तिः। ज्योतिरादिपूर्वत्वेन किं। यद् अच्णया स्तोमीयाः। स्तो इति किं। चतुस्तनां करोति। ज्योतिस्त्वा अस्याः॥

**तर्ह्यांꣳस्तस्मिंल्लोकान्विद्वाꣳस्ताꣳस्त्रीन्युष्मानूर्द्ध्वान्त्र्यम्बकानृतूनश्मन्क्ष्णुवन्पितृननान्कपालाꣳस्तिष्ठन्नाद्युदात्ते नेमिर्देवान्त्सवनेपशूंस्तकारपरः सकारं प्राकृतो नित्ये प्राकृतो नित्ये॥ १४॥**

तर्ह्यान् तस्मिन् लोकान् विद्वान् तान् त्रीन् युष्मान् ऊर्द्ध्वान् त्र्यम्बकान् ऋतून् अश्मन् क्ष्णुन् पितृन् अनान् कपालान् तिष्ठन् 'आद्युदात्ते' 'तिष्ठन्' ग्रहणे, नेमिर्देवान् सवनेपशून्, एतेषु ग्रहणेषु 'प्राकृतः' नकारः 'नित्ये' पदे, वर्त्तमानः 'तकारपरः' 'सकारम्' आपद्यते। यथा, शततर्ह्यांꣳस्तृहन्ति। तस्मिंस्त्वादधामि। इमानेव लोकाꣳस्तीर्त्वा। विद्वांस्त्रैधातवीयेन यजेत। ताꣳस्ते दधामि जभ्भयोः। त्रीꣳस्तृचाननु। युष्माꣳस्तेनु। ऊर्द्ध्वांꣳस्तानुपब्दिमतः। त्र्यम्बकाꣳस्तृतीयसवनम्(१)। ऋतूꣳस्तन्वते(२)। अश्मꣳस्ते चुत्। पुनः क्ष्णुꣳस्त्वा(३)। पितृꣳस्तन्तुरिति(४)।

---

१ सवनमकुर्वतेति ख०, ग०, च।

२ ऋतूं स्तन्वते कवय इति ख०। ऋतूं स्तन्वते कवयः प्रजानतीरिति ग०।

३ क्ष्णुं स्त्वा पितरमिति ग०।

४ पितृं स्तन्तुरिति प्रजा इति ख०।

प्राणाꣳस्तस्यान्तपन्ति। अपिविकृतमितिवचनादेतद्भवति। द्वाद-शकपालाꣳस्तृतीयसवने। त्रिभिस्तिष्ठꣳस्तिष्ठति। आद्युदात्त इति किं। न प्रत्यतिष्ठन्तावस्तुकोसि। अप्यकारादिति प्राप्तिः। नेमिर्देवाꣳस्त्वं परिभूरसि। नेमिरिति किं। जात-वेदो वपया गच्छ देवान् त्वꣳहि। मध्यन्दिने सवने पशूꣳस्तृतीय-सवने। सवन इति किं। प्रजां पशुन्तेनावर्द्धत। तकारपर इति किं। तस्मिन् प्रजापतिः (१)। प्राकृत इति किं। तान् प्रेरय। प्राकृतीयं नकारो मकारस्पर्शपर इति प्राप्तत्वात्। नित्ये तकारऽत किं। विद्वान् सोमेन यजते। अनित्योयन्त-कारः। यतः पदसमये नास्ति। तकारः परो यस्मादसौ, तथोक्तः॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे षष्ठोऽध्यायः॥ ६॥

---

अथ सप्तमोऽध्यायः।

## अथ नकारोणकारं॥ १॥

अथेत्यधिकारः। नकारो णकार इत्येतदधिकृतं वेदि-तव्यम्, इत उत्तरं यद्वक्ष्यामः।

## पुषूकृधिसुवःसमिन्द्रास्थूर्युरुवाःषट्त्रिग्राममनिष्पूर्व्वः॥ २॥

पुषू कृधिसुवः समिन्द्रः अस्थूरि उरुवाः षट् त्रिः ग्राम,

---

१ प्रजापतिर्लोकान् द्रविणावतः कुरुते इति ख०, चिह्नितपुस्तके धिकः पाठः।

निः, एवम्पूर्वो नकारो णकारमापद्यते। यथा, ऊर्द्ध ऊषुण ऊतये। इन्द्रो धर्त्ता गृहेष्वित्यत्र णत्वं न भवति, पदग्रहणेष्विति-वचनात्। मोषूण इन्द्र। सुसू इत्येतयोर्यदा षत्वं नास्ति तदा णत्वनिषेधार्थम्। नैकृतग्रहणं यथा, सुन ऊतये। सून इन्द्रः। ब्रह्मणा ऽधि सुवर्णं शुक्रं। ऽधीति किं। सुवर्नं शुक्र स्वाहा। समिन्द्र णो मनसा। समिति किं। वर्त्तयेन्द्र नर्द्दबुद। अस्मूरिणो गार्हपत्यानि सन्तु। उरुऽद्रुरुणस्कृधि। तस्मा-द्दार्णाम वो हितं। षसवत्यै स्वाहा। त्रिणवस्तोमो वसूनां। ग्रामणीयं प्राप्नुवन्ति(१)। निर्णेनिजति ततोऽधि। विसर्गेण किं। निर्नो रयिं सुभोजसं॥

## हन्यादुप्यमानश्च॥ ३॥

चकारो निष्पूर्वत्वमन्वादिशति। निःशब्दोत्तरयोर्हन्यादुप्य-मानमित्येतयोर्ग्रहणयोर्नकारो णकारमापद्यते। यथा, योनेर्गर्भं निर्हण्यात्। निरुप्यमाणमभिमन्त्रयेत। अन्वादेशः किमर्थः। न निर्हन्यान्न लोहितं(२)।

## पारोपरिपरीप्रपूर्व्वः॥ ४॥

पारो परि परी प्र, एवम्पूर्व्वो नकारो णकारमापद्यते। यथा, पारोणन्नुश्वसे। परि णो रुद्रस्य(३)। वीरवन्तं परी णसं। प्रणो देवी सरस्वती॥

---

१ ग्रामणी राजन्य इति ग०। ३ रुद्रस्य हेतिरिति ख०।

२ लोहितं कुर्य्यादिति ख०, ग० च।

## अवर्णव्यवेतोऽपि ॥ ५ ॥

अपिशब्दः पर्य्याद्यन्वादेशकः(१)। पर्य्यादिपूर्व्वो नकारोऽवर्णव्यवहितोपि(२) णत्वं भजते। यथा, अग्रं पर्य्यणयन्(३)। पर्य्याणीयाहवनीयस्य। प्राणाय स्वाहा। अनुप्राण्यात्(४)। अवर्णव्यवेत इति किं। परिमिनुयात्(५)। प्रमिनाम व्रतानि।

## वाहनउह्यमानीयानमयन्यवेनवञ्च ॥ ६ ॥

वाहनः, उह्यमानः, यानं, अयन्, यवेन, वन्, एषु(६) ग्रहणेषु चकारात्कष्टप्रपूर्व्वेषु(७) नकारो णत्वं भजते। यथा, प्रवाहणे वह्निरसि(८)। प्रेति किं। परिमिनुयात्। प्रोह्यमाणोऽधिपतिः(९)। प्रयाणमन्वन्ये(१०)। अयन्निति पदैकदेशो बहुपादानार्थः। तस्मादादित्यः प्रायणीयः। प्रायणीयं कार्य्यं। प्रायणमेषा प्रतिष्ठा(११)। प्रायणीयस्य पुरोऽनुवाक्याः। प्रणी-

---

१ पर्याद्यन्वादिशतीति ग०, ङ० मु० च।

२ अवर्णव्यवेतोपीति ग०, ङ० मु० च।

३ अग्रं पर्य्यणयतेति ख०।

४ अनुप्राण्यात् प्रथमामिति ख०। प्राण्यात् प्रथमामिति ग०।

५ परिमिनुयात् सप्तेति ख०।

६ एतेष्विति ख०, ग०, ङ० म० च।

७ चकारात्कष्टपूर्वेष्विति ग०,ङ०मु०च।

८ प्रवाहणे वह्निरिति ग०।

९ प्रोह्यमाणेऽधिपतिरिति ग०।

१० प्रयाणमन्वन्यदद्ययुरिति ग०। यस्य प्रयाणमन्वय इद्ययुरिति ख०।

११ योवै यज्ञस्य प्रायणं प्रतिष्ठामिति ख०।

यैरन्(१)। वन्निति पदैकदेशो बहूपादानार्थः। प्रयवेणु पश्व(२)। यदि वा तावत् प्रवणं(३)। अन्वादेशेन किं। असि हव्यवाहनः। उदयनं वेद॥

## प्रापूर्व्वश्च॥ ७॥

चकारात्कष्टवन्नित्यत्र ग्रहणे(४) नकारः प्रा इत्येवम्पूर्व्वो णकारं भजते(५)। यथा, प्रावणेभिः सजोषसः॥

## इन्द्रोऽयजुःपूर्व एनंकेन॥ ८॥

इन्द्रः, अयजुः, इत्येवम्पूर्वयोरेनं केन इत्येतयोर्नकारो णत्वं भजते। यथा, इन्द्र एणं प्रथमः। अयजुष्केण क्रियते। एवम्पूर्व इति किं। रुद्र एनं भूत्वा। ब्रह्मवादिनः केन(६)। एनं केनेति किं। इन्द्रो नेषदति(७)॥

## नृश्रोपूर्व्वो मनाः॥ ९॥

नृ श्रो इत्येवम्पूर्व्वो मना इत्येवं नकारो णकारं(८) भजते।

---

१ प्रायणीयेचन्निति ख०, ग० च।

२ तामानुपयन्ति प्रयवेणेति ख०।

३ आहवनीयान् प्रवणां स्यादिति ग,- चिह्नितपुस्तकेधिकः पाठः।

४ चकारात्कष्टवन्नितिग्रहणे इति ग०। चकारात्कष्टे वन्नितिग्रहणे इति इ० मु०।

५ णत्वं भजते इति ख०, ग०, इ० मु० च।

६ केन तद्जानोति ख०, ग० च।

७ नेषदतिदुरितानि विश्वा इति ख०।

८ णत्वमिति ख०, ग०, इ०मु० च।

यथा, नृमणा अजस्रं[१]। श्रीमणाः शतपयाः। एम्पूर्व इति किं। सुमना उपागहि॥

**अङ्गानामोने-गानि-गानां-ग्यानि-यामेन॥१०॥**

अङ्गानां, ओने, गानि, गानां, ग्यानि, यामेन, एषु[२] नकारः संहितायां णत्वं भजते[३]। यथा, यत्राङ्गाणाᳪ समवद्यति। आयुषि दुरोणे। अतिदुर्गाणि विश्वा[४]। पुरोगाणां चक्षुषे। सुवर्ग्याण्यासन्। अन्तर्यामेणान्तरधत्त॥

**रषःपूर्वो हवन्यङ्केहन्॥११॥**

हवनी, अङ्के, हन्, एषु[५] ग्रहणेषु नकारो रेफपूर्वः रष इत्येवम्पूर्वो वा णत्वं भजते। यथा, अग्निहोत्रहवणी च। शरद्यपराह्णे। हन्निति पदैकदेशग्रहणं[६] बहूपादानार्थं। रक्षोहणः[७]। वैष्णवान् रक्षोहणः[८]। वृत्रहणं पुरन्दरं। एवम्पूर्व इति किं। साङ्क एवास्मै। बलगहनः॥

**ऋपूर्वो मयान्यनी॥१२॥**

मयानी, अनी, इत्यत्र ऋपूर्वो नकारो णत्वं भजते। यथा,

---

१ नृमणा अजस्रमिन्धान इति ख०।
२ एतेष्विति ग०, इ० मु० च।
३ णत्वमाभजते इति ख०।
४ स नः पर्षदतिदुर्गाणि विश्वा इति ग०।
५ एतेष्विति ग०।
६ पदैकदेश इति ख०, इ० मु० च।
७ रक्षोहणमिति ग०।
८ वैष्णवी रक्षोहणौ इति ख०, ग० च।

दारुमयाणि पात्राणि। त्वे वसूनि पूर्वणीक(१)। एवम्पूर्व इति किं। यानि मृन्मयानि(२)। अग्नयेनीकवते। रेफग्रहणेन किं। स्वनीकसन्दृक्॥

## वाघाषपूर्वस्तष्टं॥ १३॥

वाघा इत्येवम्पूर्वः षकारपूर्वश्च तकारः, टकारमापद्यते(३)। दार्व्वाघाट इति, दारु आघातः। आयुष्ट आयुर्दाः(४)। वाघा इति किं। प्रवात आदित्यानां। षपूर्व इति किम्। अग्निस्ते तेजः॥

## थश्च ठं॥ १४॥

थकारः षकारपूर्वत्वाकर्षकः। थकारः षकारपूर्वः, ठकारं भजते। यथा, गोष्ठं मा। एवम्पूर्व इति किं। गच्छ गोस्थानं॥

## न तकारपरः॥ १५॥

वाघाषादिविधिरनधिकृतत्वादुत्पन्नप्रध्वंसी। तस्मादत्र नायं निषेधः(५)। किन्तु प्रकृती णत्वविधिरनेन विषयीक्रियते। तकारपरो नकारो णत्वं नापद्यते। यथा, पर्य्यन्तरिचात्। पारीपरिपरीप्रपूर्वः, अवर्णव्यवेतीपीत्यादिभ्यां(६) प्राप्तिः॥

---

१ पुर्वणीक चोत इति ख, ग० च।

२ मृन्मयानि साचादिति ख०, ग० च।

३ ठकारं भजते इति इ० मु०।

४ आयुर्दा अग्ने इति ग०।

५ नायं विशेष इति ग०।

६ अवर्णव्यवेतोपि इत्याभ्यामिति ख०, इ० मु० च।

नश्यतिनूनंनृत्यन्त्यन्योन्याभिरन्यान्यन्तश्चान्तश्च ॥ १६ ॥

चकारो निषेधाकर्षकः। नश्यति, नूनं, नृत्यन्ति, अन्यः, अन्याभिः, अन्यानि, अन्तश्च, एतेषु ग्रहणेषु नकारः, पदान्तश्च नकारो णत्वं[1] न भजते। यथा, वाससा पर्यानश्यति। अवर्ण-व्यवेतोपेति प्राप्तिः। प्रनूनं पूर्णबन्धुरः। परिनृत्यन्ति[2]। प्रान्यः सं सति। प्रान्याभियच्छति[3]। प्रान्यानि पात्राणि[4]। पारीपरिपरीप्रपूर्व इत्येषां प्राप्तिः। अनित्येतावता सिद्धे, अन्यो-न्याभिरन्यानोति किं। प्रतिपदपाठेन अनुप्राख्यात् प्रथमा-मित्यत्र नैष निषेधः प्रसरति। पदान्तो नकारो णत्वं न भजते। यथा, वृत्रहन्क्रूर विद्वान्। रषःपूर्व इति प्राप्तिः॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे सप्तमोऽध्यायः ॥ ७ ॥

---

## अथाष्टमोध्यायः।

### अथ प्रथमः ॥ १ ॥

अथेत्ययमधिकारः। प्रथम इत्येदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः। विसर्जनीयपर्यन्तोयमधिकारः॥

---

१ पदान्तश्च णत्वमिति ग० ढ० मु० च।
२ मार्जालीयं परिनृत्यति इति ख०।
३ यच्छत्वन्यैरिति ग०।
४ पात्राणि युज्यन्त इति ख०।

## उत्तमपर उत्तमꣳ सवर्गीयं ॥ २ ॥

उत्तमपरः प्रथम आत्मनः सवर्गीयमुत्तममापद्यते। यथा, वाङ्म आसन्। षण्मवत्यै स्वाहा। तन्महेन्द्रस्य। एवम्पर इति किं। वाक्त आप्यायतां। प्रथम इति किं। इमां नोवाच(१)। उत्तमः परो यस्मादसौ स उत्तमपरः॥

## तृतीयꣳ स्वरघोषवत्परः॥ ३ ॥

स्वरपरो घोषवत्परश्च प्रथमः, सवर्गीयं तृतीयमापद्यते। यथा, ऋधगया ऋधगुत। यद्दै होतेत्यादि। स्वराश्च घोषवन्तश्च स्वरघोषवन्तः। ते परे यस्मादसौ स तथोक्तः॥

## ककुच्च मकारपरः॥ ४ ॥

ककुदित्यस्मिन् ग्रहणे अन्त्यो वर्णो मकारपरः, चकाराकृष्टं तृतीयं सवर्गीयमापद्यते(२)। यथा, ककुद्मान् प्रतूर्त्तिः(३)। ककुदिति किं। य उन्मायेत्। एवम्पर इति किं। ककुच्छन्दः(४)। मकारः परो यस्मादसौ मकारपरः। उत्तमपर उत्तमꣳ सवर्गीयमित्यस्यायमपवादः॥

---

१ वाचं व्याकुर्वितीति इति ख०।

२ सवर्गीयं तृतीयमापद्यते इति ख०, ग०, इ० मु० च।

३ प्रतूर्त्तिर्वाजसातम इति ग०।

४ ककुप्छन्दश्च इति ग०।

## अथ विसर्ज्जनीयः ॥ ५ ॥

अथशब्दो विसर्ज्जनीयं लक्ष्यत्वेनाधिकरोति, इत उत्तरं यदुच्यते। अथ स्वरपरो यकारमित्यवधिभूतोऽयमधिकारः।

## रेफमेतेषु ॥ ६ ॥

स्वरेषु घोषवत्सु च परतः(१) विसर्ज्जनीयो रेफमापद्यते। यथा, तदग्निराह। आशोर्मूर्जं। एतेष्विति(२) बहुवचनान्तस्य सर्व्वनाम्नो निर्द्देशात् स्वरघोषवतां परनिमित्तमुपादानं। तेषामेव प्रकृतत्वात्। एतेष्विति किं। अग्निश्चम इन्द्रश्च मे।

## न रेफपरः ॥ ७ ॥

रेफपरो विसर्ज्जनीयो रेफन्नापद्यते। यथा, सुवो रोहाव। अहोरात्रे(३)। घोषवत्वाद्रेफस्य पूर्वविधिः प्राप्तः(४)। रेफः परो यस्मादसौ रेफपरः॥

## ह्वारभार्वार्हारविभरजीगरकरनन्तर्विवःसुवःपुनरहरहः-प्रातर्वस्तःशमितःसवितःसनुतस्तनुतस्तोतर्होतःपितर्मातर्य्य-ष्टरेष्टर्नेष्टस्त्वष्टः ॥ ८ ॥

ह्वाः, अभाः, वाः, हाः, अविभः, अजीगः, अकः, अनन्तः, विवः, सुवः, पुनः, अहरहः, प्रातः, वस्तः, शमितः, सवितः, सनुतः,

---

१ पर इति ख०।

२ स्वरेष्वितीति ग०।

३ रेवती रमध्वमिति ग,चिह्नितपुस्तके-धिकः पाठः।

४ पूर्वविधितः प्राप्तिरिति ख०।

स्तनुतः, स्तोतः, होतः, पितः, मातः, यष्टः, एष्टः. नेष्टः, त्वष्टः, एतेषु विसर्ज्जनीयो रेफमापद्यते, स्वरघोषवत्परः। यथा, माह्वामित्रस्य(१)। योनावभारुखा। तस्माद्वार्णाम वो हितं। मा मे प्र हारस्तिवा इदं। अबिभस्तन्तमबिभरबिभःस्तं। ओषधीरजीगरजोगरोषधीरोषधीरजोगः, अजीगरित्यजोगः। देवत्राकरजत्तारेण। करावरनुदात्ते परे इति वक्ष्यति। तेनैतदपि(२) सिध्यति, अप्यकारादितिवचनादिति चेत्। मैवं। अनुदात्तेऽकःशब्दे तद्भवति। इदन्त्वन्यस्वरार्थमपि(३)। यथा, अर्व्वाकुरकरर्व्वार्व्वाकः (४) आद्युदात्तस्वरोयम्(५)। यज्ञपरुषोरनन्तरित्यै(६)। अन्तरनाद्युदात्ते इति वक्ष्यति। तस्मादन्कारादि चेतिवचनात् सिद्यतोति चेत्। मैवं। अनाद्युदात्ते तद्भवति। आद्युदात्तस्वग्रमपि ग्रहणं(७)। च विवर्विवश्च च विवः, विवरिति विवः। सुवरसि सुवर्म(८)। पुनरासद्य सदनम्। अहरहर्विद्वानिनां। अहारहरित्यनिङ्ग्यान्तो निषिध्यते(९), इत्येवंरूपस्यायं नियमः(१०)। प्रातरुपसदः। दोषा वस्तर्धिया वयम्। हवीः शमित-

---

१ द्रंहस्व माक्कार्वसूनामिति ख०।

२ तेनैव तदपि इति ख०, ग०च। तेनैवैतदपि इति इ० मु०।

३ अन्यस्वरार्थमितीति ग०, इ० मु० च।

४ अर्वाकः सलोकः सुकृतं पृथिव्या इति ख,चिक्नितपुस्तकेधिकः पाठः।

५ आद्युदात्तस्त्विदमिति ग०,इ०मु० च।

६ यज्ञपरुषोनन्तरित्यै इति ख०।

७ आद्युदात्तस्त्वयमिति ख०। आद्युदात्तमिदं ग्रहणमिति ग०। आद्युदात्तार्थमिदं ग्रहणमिति इ० मु०।

८ सुवर्म यच्छेति ख०, ग० च।

९ अहरहरनोङ्ग्यांशो निषेधिष्यत इति क०। अहरहरिति अनङ्ग्यान्तो निषिध्यते इति ग०।

१० एवंरूपस्य नायं नियम इति ग०, इ० मु० च।

रिति(१)। देव सवितरेतत्ते। द्वेषः सनुतर्युयोतु(२)। स्तनुतरिति(३) शाखान्तरे। एतꣳ स्तोतरेतेन। होतर्यविष्ठ सुक्रतो दमूना। मरुतां पितः पितर्मरुतां मरुतां पितः। पृथिवी मातर्मा मा हिꣳसीः। अग्ने यष्टरिदं नमः। अशीयेष्टरेष्टरशीयाशीयेष्टः। नेष्टः पत्नीं पत्नीं नेष्टर्नेष्टः पत्नीं। शिवस्त्वष्टरिहागहि। स्वरघोषवत्पर इति किं। अबिभस्तं भूतानि पुनस्ते मैषां। अवर्णपूर्वस्तु लुप्यत इति क्वचिल्लोपप्राप्तिः। अथ स्वरपरो यकारमिति क्वचिद्यकारप्राप्तिः(४)। ओकारमः सर्वोकारपर इति क्वचिद्दोत्वप्राप्तिः(५)। ता एताः प्राप्तीः प्रतिषेद्धुं द्वारभाराद्यारम्भः॥

## करावरनुदात्ते पदे ॥ ९ ॥

कः, आवः, इत्येतयोर्विसर्ज्जनीयः पदकाले अनुदात्ते पदे वर्त्तमानः स्वरघोषवत्परो रेफमापद्यते। यथा, मिथुयाकर्भागधेयं। सुरुचो वेन आवः, आवरित्यावः। अनुदात्त इति किं। कोस्येश्वरः। आ वो वाजेषु यज्जनाः(६)। एवम्पर इति किं। अधियाम कः समर्ध्यै॥

## अन्तरनाद्युदात्ते ॥ १० ॥

अन्तरित्यस्मिन् पदे अनाद्युदात्ते विसर्ज्जनीयः(७) स्वरघोषवत्-

---

१ हवीः३ ग्रमितरिति इति ख०।

२ आराच्चिद् द्वेषः सनुतर्युयोतु इति ख० ग०, च।

३ ननुतरिति ख०।

४ क्वचिद्यत्वप्राप्तिरिति ग०, इ० मु० च।

५ क्वचिदोकारप्राप्तिरिति ख०।

६ आ वोवाजेषु यंजनेति ख०, ग० च।

७ स विसर्जनीय इति ख०।

परो रेफमाप्नोति(१)। यथा, अन्तरग्नेरुचा(२)। अग्निमन्तर्भविष्यन्ती। अन्तर्यामे मघवन्। अनाद्युदात्त इति किं। एषोन्तोन्तं मनुष्यः। एवम्पर इति किं। अन्तस्ते दधामि। अन्तोदात्त इति वक्तव्ये बहुस्वरत्वं बह्वपादानार्थं। अन्यथा ह्यन्तोदात्तस्यैव (३)स्यात्। इह तु न स्यात्। अन्तर्वेदि मिथुनौ(४)। अन्तर्यामे मघवन्। आदावुदात्तः(५) यस्य तत् आद्युदात्तं, न आद्युदात्तं अनाद्युदात्तं, तस्मिन्॥

## आवृत्परः॥ ११॥

आवृत् इत्येवम्परो विसर्ज्जनीयो रेफमाप्नोति(६)। यथा, जिन्वरावृत् स्वाहा। उग्ररावृत् स्वाहा। भीमरावृत् स्वाहा॥

## इतिपरोऽपि॥ १२॥

अपिशब्द आवृत्परत्वकार्य्यमन्वादिशति(७)। असौ विसर्जनीयः, इतिपरो रेफमाप्नोति(८)। इति श्रुतः श्रुतरितीति श्रुतः(९)। अन्वादेशः किमर्थः। हवनश्रुत ह(१०)। इति परः(११) यस्मादसौ इतिपरः॥

---

१ रेफमापद्यते इति ग०, इ० मु० च।

२ अन्तरग्ने रुचा त्वमिति ख०, ग०च।

३ अन्यथा त्वन्तोदात्तस्यैव स्यादिति इ० मु०।

४ मिथुनौ सम्भवत इति ख०।

५ आदिरुदात्त इति ख०।

६ रेफमापद्यते इति ख०।

(७) आवृत्परं विसर्जनीयमन्वादिशति इति ग०, इ० मु० च। आवृत्परं विसर्जनीयं चान्वादिशतीति ख०।

८ रेफमापद्यते इति ख०।

९ इति श्रुतिरितीति श्रुत इति ग०। इति श्रुतिः श्रुतरितीति श्रुत इति ख०।

१० ऋतुभिर्हवनश्रुत इति ग०। हवनश्रुतो हवं हवनश्रुत इति ख०।

११ इतिः पर इति इ० मु०।

अहारहःसुवरनिङ्ग्यान्तः ॥ १३ ॥

अहाः, अहः, सुवः, एतेषु(१) विसर्जनीयोऽनिङ्ग्यान्तः स्वरघोषवत्परो रेफमापद्यते(२)। यथा, अहार्जातवेदः(३)। अहर्देवानामासीत्(४)। सुवर्देवाꣳ अगन्म। अनिङ्ग्यान्त इति किं। अभिपूर्वं चाहा भवन्ति। प्रत्यङ् षड़हो भवति(५)। देवसुव इति देवसुवः। एवम्परः इति किं। एवमुत्तममहः स्यात्(६)। सुवश्च मूर्द्धा च। ह्वारभारादिसूत्रे हारित्यनेन ग्रहणेन(७) अहाःशब्दस्य अप्यकारादितिवचनाद्रेफसिद्धौ सत्यामत्र पुनर्वचनमिङ्ग्यान्तस्य अहाःशब्दस्य प्रतिषेधार्थं। नन्वत्रैव हारिति वक्तव्यं, अप्यकारादितिवचनेन कार्य्यसिद्धेः, न तु तत्र गौरवदोषापत्तेरिति चेत्(८)। मैवं। अनिङ्ग्यान्त इत्युक्तेरनिङ्ग्यान्तत्वमपि(९) सम्भावनीयं। तच्च हारित्येवंरूपे ग्रहणे नास्तीत्यत्रेदं विशेषणमनर्थकं स्यात्। तथाप्येवंरूपे माभूत्। अप्यकारादित्वे भवतीत्यन्यः पक्षः(१०)। न तु सरल इति सूत्रे हारिति ग्रहणमुपयुज्यते(११) ॥

---

१ एतेषु पदेषु इति ख०।

२ रेफमाप्नोतीति ग०, इ० मु० च।

३ अहर्जातवेदा विचर्षणीति ख०, ग० च।

४ अहर्मासैरिति ख०, ग० च।

५ ज्योतिर्गौरायुरिति त्र्यहो भवतीति ग०, चिह्नितपुस्तके भिन्नः पाठः।

६ प्रायणीयमहस्तस्मादिति ग०चिह्निते इ०, मु० पुस्तके च भिन्नः पाठः।

७ हारित्यनेनैवेति ख०।

८ न तु तद्गौरवापत्तेरिति चेत् इति इ०मु०। न तु तद्गौरवापत्तिरिति चेत् इति ग०।

९ इत्युक्तेरनिङ्ग्यान्तत्वमिति इति इ०मु०। इत्युक्तेरिङ्ग्यान्तमेवेति ख०।

१० तथाप्येवंरूपे माभूत्, इति किन्त्वकारादित्वे भवतीति जघन्यः पक्ष इति ग०, इ० मु० च। तथाप्येवंरूपे माभूत् किन्त्वकारादित्वे भवतीति गौरवं जघन्यः पक्ष इति ख०।

११ ननु सरलेतिगम्यमानस्य चार्थस्य नैव दृष्टं विशेषणमितिन्यायांशे सुतरामहारिति ग्रहणमुपयुज्यत इति ख०।

## न भिर्भ्याम्परः ॥ १४ ॥

साविध्येन लब्धः पूर्व्वसूत्रोक्तो विसर्ज्जनीयो भिः, भ्यां, इत्येवम्परः(१) न रेफमाप्नोति। अर्थात् अहरित्यत्र विसर्ज्जनीयः परिगृह्यते। इतरत्र स्थितस्य एवम्परत्वाभावात्। यथा, उत्तरैरहोभिः(२)। समहोभ्यामिति(३)।

## अꣳहस्य सर्व्वेषां ॥ १५ ॥

चकारो निषेधाकर्षकः(४)। अꣳह इत्यस्मिन् ग्रहणे विसर्ज्जनीयो न रेफमाप्नोति। अहारहरिति प्राप्तिः। अत्र ग्रहणे केचिदनुस्वारमिच्छन्ति केचिन्नेच्छन्ति। सर्व्वेषां तेषामेव निषेधो भवति। अनुस्वारमिच्छद्भिरपि प्राप्तिरेवं प्रतिपाद्यते,

विधेर्मध्यस्थनासिक्यो न विरोधी भवेत् सतः(५)।
तस्मात् कुर्व्वन्ति कार्य्याणि वर्णानां धर्म्म एव तु ॥ इति।
यथा, अꣳह इन्द्रमेवाꣳ होमुचं। अꣳहोमुचे प्रभरेम ॥

## अनवर्णपूर्व्वस्तु रेफपरो लुप्यते ॥ १६ ॥

अवर्णादन्यस्वरपूर्व्वो विसर्ज्जनीयो रेफपरो लुप्यते। यथा, रेवती रमध्वं। एवम्पूर्व्व इति किं। यो रुद्रो अग्नौ। एवम्पर इति किं। रेवतीर्नः सधमादः। तुशब्दारम्भादवर्णपूर्व्वोऽपि ह्वार-

---

१ भिर्भ्यामेवम्पर इति ग०, इ० मु० च।
२ उत्तरैरहोभिश्चरन्तीति ख०, ग० च।
३ समहोभ्यामिति निनयतीति ख०। अहोभ्यामिति निनयतीति ग०।
४ निषेधमाकर्षतीति ख०, ग०, इ० मु० च।
५ भवेत् स्मृत इति इ० मु०।

भारादीनां विसर्गो(१) लुप्यते, पूर्व्वस्वरश्च दीर्घमाप्नोति(२)। यथा, रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः। तर्हि सुवो रोहावेत्यत्र लोपदीर्घे किं न स्यातां। द्विरुक्तत्वादिति ब्रूमः। तत् कथं। ह्वाराभारादिसूत्रे अहारहः सुवरित्यत्र च(३)। नन्वहोरात्रे इत्यत्र कथमोत्वं। अन्यार्थेन ग्रहणसामर्थ्येनेति ब्रूमः। तत् कथं। अहोरात्रे धृतव्रते इत्येवं रूपसाम्यादहोरात्राभ्यां, अहोरात्रयोरित्यादि विज्ञेयं। एवञ्चेदधिषवणे इति ग्रहणसामर्थ्येनैव षत्वे सिद्धे न धिपूर्व्वे इति षत्वनिषेधो न विज्ञेयः(४)। सत्यं। स च शब्दस्य अधिषवणे इति ग्रहणसामर्थ्येन षत्वं सिद्धतु। स्थानशब्दस्य कथं सिद्येत्, ग्रहणादिसामर्थ्याभावात्। तस्मात्तदर्थं तत् सूत्रं(५) सार्थकमिति सन्तोष्टव्यं(६) तदर्थं चेति गुड़जिह्विकान्यायः। तथाहि ग्रहणसामर्थ्यादिति गमनिकामात्रं, कण्ठोक्तिस्तु विशेषः। तथा सर्व्वशब्दार्थमपि(७) सूत्रमिति भावः। अवर्णादन्यः, अनवर्णः, असौ पूर्व्वो यस्मात् सः तथोक्तः। रेफः परो यस्मादसौ रेफपरः॥

---

१ विसर्जनीय इति ख०।

२ दीर्घत्वमापद्यते इति ग०।

३ ह्वारभारादिसूत्रे सुवः पुनरहरह-रिति अहरहः सुवरिति चेति ग०।

४ सत्वे सिद्धे न धिपूर्वे इति निषेध-निषिद्धे न विरोध इति इ० मु०। षत्वे सिद्धे निषिद्धे न धिपूर्वे इति निषेध इति विरोध इति ग०। सत्वं सिद्धे न धिपूर्वे इति षत्वजिवेषनिषेधो न विधेय इति ख०।

५ तावत् सूत्रमिति ग०, इ०, मु०, च। वा तत् सूत्रमिति ख०।

६ सार्थकमिति तदर्थञ्च द्रष्टव्यं इति ग०, इ० मु० च। सामर्थ्यमिति सन्तोष्टव्यमिति ख०।

७ ततः सर्वशब्दार्थमिति ग०, इ०मु०च।

## दीर्घश्च पूर्वः ॥ १७ ॥

तस्माद्रेफपरविसर्ज्जनीयाल्लुप्तात् पूर्व्वो यः[१] स्वरो ह्रस्वः स च दीर्घमापद्यते। यथा, गुरू रौद्रः। तित्तिरी रोहित्। विष्णू रूपं। यदा तस्य विसर्ज्जनीयस्य लोपः,[२] तदैव दीर्घत्वं यथा स्यादित्येवमर्थः, 'च' शब्दः ॥

## एष्टश्च ॥ १८ ॥

एष्टरित्यस्मिन् ग्रहणे विसर्जनीयो रेफपरोऽवर्णपूर्व्वोपि लुप्यते, पूर्व्वस्वरश्च दीर्घः। यथा, एष्टा रायः। 'च'शब्दो लोपदीर्घयोराकर्षकः। नन्वेतदनुपपन्नं। द्वारभाराद्यन्तःपातित्वादेष्टरित्यस्य रुक्मो अन्तरन्ता रुक्मो रुक्म इतिवचनादनवर्णपूर्वस्त्वित्यत्र तुशब्देन लोपदीर्घे सिद्धे[३]। वक्ष्यमाणमतभेदाश्रयत्वज्ञापनाय गृहीतमेतदुपपन्नतरमिति परिहारः ॥

## नैकेषां ॥ १९ ॥

एकेषां मते एष्टरिति विसर्ज्जनीयो रेफपरो न लुप्यते। अत एव पूर्व्वस्वरदीर्घाभावश्च। किन्तु घोषवत्परश्चेत्योत्वं। यथा, एष्टो रायः। वररुचिविरचितमेतत्। माहिषेयभाषितं त्विदम्,

---

१ पूर्वोपि य इति ख०, ग०, इ० मु० च। तुशब्देन लोपदीर्घौ सिद्धौ इति ख०।

२ यदा विसर्जनीयल्लोप इति ग०। यदा विसर्जनी यस्य लोप इति इ० मु०।

३ द्वारभाराद्यन्तःपातित्वादेष्टरित्यस्य रुक्मो रुक्मो अन्तरितिवदवर्णपूर्वस्त्वित्यत्र तुशब्देन लोपदीर्घे सिद्धे इति ग०। द्वारभाराद्यन्तःपातित्वादेष्टरित्यस्य रुक्मो अन्तरन्ता रुक्मो रुक्म इति वदनवर्णपूर्वस्त्वित्यत्र तुशब्देन लोपदीर्घे सिद्धे इति ग०।

एष्टरिति विसर्ज्जनीयो रेफपरो न रेफमापद्यत इति। सिद्ध-रूपमुभयोः समानं॥

## द्वावुत्तमोत्तरीयस्य रेफं॥ २०॥

उत्तमोत्तरीयस्य शाखिनोर्मते एष्टरिति विसर्ज्जनीयः, तत्परो रेफश्च द्वावेतौ रेफमापद्येते। यथा, एष्टराँयः। अयमर्थो वाररुचोक्तः। माहिषेयोक्तस्तु, द्वावुत्तमोत्तरीय इति कस्यचिन्नाम, तन्मते एष्टरिति विसर्ज्जनीयो रेफपरो रेफमापद्यते। यथा, एष्टराँय इति॥

## साङ्कृत्यस्योकारं॥ २१॥

साङ्कृत्यस्य मते एष्टरिति विसर्ज्जनीयो रेफपर उकारमापद्यते इति माहिषेयोक्तं। तत उवर्णपर ओकारमित्योत्वं। यथा, एष्टो रायः। अस्य च नैकेषामित्यादेश्चभेदाद्भेदः। सिद्धोदाहरणं तु समानम्॥

## उख्यस्य सपूर्वः॥ २२॥

उख्यस्य मते रेफपर एष्टरिति विसर्ज्जनीयः पूर्व्ववर्णेन सह उकारमापद्यते, इति माहिषेयोक्तम्। यथा, एष्टु रायः। वाररुचोक्तन्तु, एष्टरिति विसर्ज्जनीयो रेफपरो पूर्व्वेण सह रेफमापद्यते इति। यथा, एष्टा रायः। पूर्वेण सह वर्त्तत इति सपूर्व्वः। अस्मिन् विकल्पजाले प्रथममेष्टव्येति सूत्रमेवेष्टं॥

## कखपकारपरः षमकारपूर्वः समवग्रहः॥ २३॥

अत्र परनिमित्तविशेषणादेतत्पर्य्यन्ता स्वरघोषवत् परानु-

वृत्तिर्मन्त्रच्या। अवग्रहविसर्ज्जनीयः(१) ककारखकारपकार-परः षकारमापद्यते, अकारपूर्वश्चेत् सकारं। यथा, अथो हविष्कृतानां(२)। असितं निष्खिदति। वहिष्पवमान उपसद्यः। नमस्कारैरेवैनं(३)। पथस्पथस्परिपतिं। अवग्रह इति किं। पुष्पावतीः प्रसुवती। नमः पितृभ्यः। ककारश्च खकारश्च पकारश्च कखपकाराः, एते परे(४) यस्मादसौ तथोक्तः। अकारः पूर्वो यस्मादसौ अकारपूर्वः॥

**आविर्निरिडःशश्वतोऽपसोदेवरिषोऽꣳहसोतिदिवोविश्व-तोऽश्मनस्तमसः॥ २४॥**

आविः, निः, इडः, शश्वतः, अपसः, देवरिषः, अꣳहसः, अतिदिवः, विश्वतः, अश्मनः, तमसः, एषु विसर्ज्जनीयः कखप-कारपरो यथाविहितं भजते। यथा, आविष्कृणुष्व। घृतं निष्पि-बति। इडस्पदे समिध्यसे। शश्वतस्कर्हस्ते(५)। अपसस्पारे अस्य। उरोरानो देवरिषस्पाहि। देवेति किं। सरिषः पातु नक्तं। अꣳहसस्पातु। अतिदिवस्पाहि(६)। अतीति किं। दिवः पृष्ठꣳ सुवर्गत्वा(७)। विश्वतस्परि हवामहे। त्वमश्मनस्परि। उद्वयं तमसस्परि। अनवग्रहार्थोयमारम्भः॥

---

१ अवग्रहान्तर्वर्त्ती विसर्जनीय इति इ० मु०।

२ हविष्कृतानामेवेति ख०, ग० च।

३ नमस्कारैरेवैनं शमयति इति ख०।

४ ते परे इति ग०, इ० मु० च।

५ शश्वतस्कर्हस्ते दधान इति ख०।

६ अतिदिवस्पाहि समावद्वन् इति ग०।

७ सुवर्गत्वा मिश्रा इति ग०।

## कृधिपिन्वपथेपरः ॥ २५ ॥

कृधि, पिन्व, पथे, एवम्परो विसर्ज्जनीयो यथाविहितं(१) भजते। यथा, उरुणस्कृधि(२)। अपस्पिन्वः। स प्रथा नमस्पथे॥

## न सकृघकारपरे ॥ २६ ॥

स, कृ, घ, एवम्परे(३) सति कृध्यादौ विसर्ज्जनीयो यथाविधिन्नापद्यते(४)। यथा, आमनसः कृधि स्वाहा। ग्रश्च नः कृधि(५)। उपध्मानीयः कृत्वे(६)। रेफेण किं। उत नो मयस्कृधि(७)। उरुक्षयाय नः कृधि। घृतं घृतयोने पिव(८)॥

## पत्नीवे-पतो-पते-पतये-पतिष्पतिम्परः ॥ २७ ॥

पत्नीवे, पतौ, पते, पतये, पतिः, पतिं, एवम्परो विसर्जनीयो यथाविहितं(९) भजते। यथा, प्रैतु ब्रह्मणस्पत्नीं वेदीं। वे इति किं। रेतोधाः पत्नीव इत्याह। शुभस्पती इदमहं। वास्तोष्पते प्रति। प्रच्यवस्व भुवस्पते। वाचस्पतये पवस्व। वाचस्पतिर्वाचमद्य। वाचस्पतिं विश्वकर्म्माणं(१०)। पत् इत्येतावतैव सिद्धे प्रतिपदपाठेन किं। दिवं गच्छ सुवः पते इत्यादिनिषेधार्थः॥

---

१ यथाविधिमिति ग०।

२ उरुकृदुरुणस्कृधीति ग०।

३ इत्येवम्परे इति ख०, ग० च।

४ यथाविहितं नापद्यते इति ख०, ग०, इ० मु० च।

५ मन्याशे ग्रश्च नः कृधि इति ख०।

६ कृत्वे दद्यायेति ग, चिह्नितपुस्तके भिन्नः पाठः।

७ मयस्कृधि क्षयद्वीरायेति ग०।

८ घृतं घृतयोने इति ख०, ग० च।

९ यथाविधिमिति ग०।

१० विश्वकर्माणमूतये इति ग०।

## दिवःसहसस्परिपुत्परः ॥ २८ ॥

दिवः, सहसः, अनयोर्विसर्ज्जनीयः,(१) परि, पुत्, एवम्परो यथाविहितं(२) भजते। यथा, दिवस्परि प्रथमं। दिवस्पुत्राय सूर्य्याय। सहसस्पुत्रो अद्भुतः। अनयोरिति किं। पृथिव्याः पर्य्यन्तरिक्षात्। परुषः परुषः परि। पुंसः पुत्रान्(३)। एवम्पर इति किं। दिवः पृथिव्याः परि। अनेकार्थः(४) पुदिति पदैकदेशः॥

## रायस्पोपरः ॥ २९ ॥

राय इत्यत्र विसर्जनीयः पो इत्येवम्परो यथाविहितं भजते। यथा, पशवो वै रायस्पोषः। पो इति पदैकदेशो बहूपादानार्थः। रायस्पोषेण(५)। धन्तनुत्वाय रायस्पोषाय। रायस्पोषस्य ददितारः। राय इति किं। विभुः पोष उतत्मना। पो इत्योकारेण किं। रायः प्रेषे भगाय(६)॥

## नमस्करोपरः ॥ ३० ॥

नम इति(७) विसर्जनीयः करो इत्येवम्परो यथाविहितं भजते। यथा, संवत्सरेण नमस्करोमि। उभयीभ्यो नमस्करोति(८)। नम इति किं। एकहायनादेनः करोति। करो इति किं। नमः कपर्द्दिने च॥

---

१ इत्यनयोर्विसर्जनीय इति ख०।

२ परिपुत्परो यथाविधिमिति ग०, इ० मु० च।

३ पुंसः पुंवां उत विश्वायुषं रयिमिति ग०।

४ अनेकार्थत्वादिति इ० मु०।

५ समद्दं रायस्पोषेणेति ख०, ग०।

६ एष्टा रायः प्रेषे भगायेति ग०।

७ नम इत्यत्रेति ग०, इ० मु० च।

८ उभयेभ्य इति ख०।

## वसुष्ककारपरः ॥ ३१ ॥

वसुरित्यत्र विसर्जनीयो ककारपरो यथाविहितं भजते। यथा, स इधानो वसुष्कविः। वसुरिति किं। विप्रः शुचिः कविः। एवम्पर इति किं। मयि वसुः पुरो वसुः। विश्वावसुः पर्य्येमुष्णात् ॥

## नाध्वरंविश्वतोऽन्तर्जातोविविशुःपरुःपुनः ॥ ३२ ॥

अध्वरं, विश्वतः, अन्तः, जातः, विविशुः, परुः, पुनः, इत्येतेषु विसर्जनीयो यथाविहितं नापद्यते(१)। यथा, अग्ने यं यज्ञमध्वरं(२)। विश्वतः परिभूरसि। आविर्निरिड इति प्राप्तिः(३)। अध्वरविशेषणान्निवृत्तिः। अध्वरमितिकिम्। इन्द्रं वो विश्वतस्परि। महादेवमन्तःपार्श्वेन। कखपकार इति प्राप्तिः। भूतस्य जातः पतिः(४)। पत्नीवेपतीति प्राप्तिः। या आविविशुः परुःपरुः। विविशुरिति किम्। परुष्परुरनुघुष्याविशस्तः। पुनः पुनर्हि(५)। पतिः पतिमिति प्राप्तिः(६) ॥

## धषवति ॥ ३३ ॥

सान्निध्यादत्र च सूत्रे नञर्थो लभ्यते, धकारस्य षकारस्य

---

१ एतेषां विसर्जनीयो यथाविहितं न भजते इति ग०, इ० मु० च।

२ यज्ञमध्वरमिति ख०, ग०।

३ आविर्निरिति प्राप्ते इति ग०।

४ जातः पतिरेक आसीदिति ग०।

५ पुनः पुनर्ह्यस्मादिति ख०, ग० च।

६ ख, ग, चिह्नितपुस्तकयोः, इ० मु० पुस्तके च कखपकारपर इत्यनयोः प्राप्तिरिति विभिन्नः पाठः।

धषौ तावस्मिन् इति धषवत्, तस्मिन् पदे परभूते(१) सति पूर्वो विसर्जनीयो यथाविहितं नापद्यते। यथा, वहिः परिधि(२)। पुरुषः पुरुषो निधनं(३)। उभयतः त्वार्भवति। कखपकारेति(४) प्राप्तिः। परभूत इति किं।(५) अधस्पदं कृणुते। ऋतस्य ज्योतिषस्पतिम्(६)॥

## परिवाप्रपरः॥ ३४॥

परि, वा, प्र, एवम्परो(७) विसर्जनीयो यथाविहितं नापद्यते। दिवः परिवाजेषु(८)। वेति किं। दिवस्परि प्रथमं। तस्मादितः प्रदानं देवाः। प्र इति ह्रस्वग्रहणं दीर्घस्याप्युपलक्षणं(९)। यथा, उदथापरश्चेति दीर्घग्रहणं ह्रस्वोपलक्षणार्थं(१०)। तर्हि प्रापूर्व्वश्चेति सूत्रं व्यर्थं। प्रशब्दस्यानुवृत्तस्यैव दीर्घोपलक्षकत्वादिति चेत्, उच्यते। प्रत्यक्षगृहीतस्यैवोपलक्षकत्वं नानुकृष्टस्येति विज्ञेयं। तथाहि, वाहन उह्यमान इत्यत्र

---

१ सान्निध्यादत्र परत्र च नञर्थौ लभ्यते। धस्य षस्य धषौ, तावस्मिंस्त इति धषवत्, तस्मिन् पदे परभूते इति ग०। इ० मु० पुस्तके तस्मिन् धषवति पदे परभूते इत्यत्र विशेषः। सान्निध्यादत्रापरसूत्रे नञर्थौ लभ्यते। धकारस्य षकारस्य धषौ, तावस्मिंस्त इति धषवत्, तस्मिन् पदे उपध्मानीयः परभूते इति ख०।

२ वहिः परिधि स्कन्दादिति ग०। वहिः परिधि स्कन्दतीति ख०।

३ पुरुषः पुरुषो हि रक्षतीति ख०।

४ कखपकारपर इति ग०।

५ अधस्पदं तमिं कृधीति ख०, चिह्नितपुस्तकेधिकः पाठः।

६ तस्मिन्नितिनिर्दिष्टे पूर्वस्येति ख०, चिह्नितपुस्तकेऽधिकः पाठः।

७ इत्येवम्परइति ग०।

८ परिवाजेषु भूषथ इति ख०।

९ यथाहि वाहन उह्यमान इत्यत्र इति ग, चिह्नितपुस्तकेचापि पाठः।

१० ह्रस्वस्योपलक्षणार्थमिति इ० मु०। ह्रस्वोपलक्षणमिति ख०।

चकारेण प्रशब्दस्तत्रानुकृष्टः। अत्र तु परिवाप्रपर इत्युपलक्ष-कत्वं[१] भवति। तथासतीदमप्युदाहरणं। वह्निः प्राणो वै मनुष्यः॥

## न निर्णं निः॥ ३५॥

निरित्यत्र विसर्जनीयस्य परत्वेपि[२] षत्वनिषेधो न भवति, षत्वमेव भवतीत्यर्थः। प्राञ्चौ निर्निंष्प्राञ्चौ प्राञ्चौ निः। आत्मना परा निष्प्र शुक्र शोचिषा॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे अष्टमोऽध्यायः॥ ८॥

---

१ परिवाप्रपर इति गृहीतत्वादुपलक्षकत्वं २ प्रपरत्वेपीति ग०, इ० मु० च। भवतीति ख०।

## अथ नवमोध्यायः।

### ऊष्मपरोऽघोषपरे लुप्यते काण्डमायनस्य ॥ १ ॥

ऊष्मपरो विसर्ज्जनीयः काण्डमायनस्य मते लुप्यते, तस्मिन्नूष्मण्यघोषवत्परे सति। यथा, चतुस्तनां करोति। वायवस्थोपायवस्थ(१)। काण्डमायनग्रहणं विकल्पार्थं। अन्येषां मते घोषवत्परेपि ऊष्मणि विसर्ज्जनीयो लुप्यते। यथा, अङ्गाः स्वाहा। ये शुक्राः स्युस्तं(२)। यो हतमना स्वयं पाप इव स्यात्। दानकामा मे प्रजा स्युः। एवञ्च विकल्पाश्रयणे सति लक्षणान्तरगतं येषु पदेषु लुप्यते तानि पदानि प्रवक्ष्याम इति सरलं(३) भवति। ऊष्मा परो यस्मात् स ऊष्मपरः(४)। न घोषवानघोषः, असौ परो यस्मात् स तथोक्तः, तस्मिन्नघोषपरे॥

### अघोषपरस्तस्य सस्थानमूष्माणम् ॥ २ ॥

अघोषपरो विसर्जनीयस्तस्याघोषस्य सस्थानमूषाणं भजते। यथा, यः कामयेत। अग्निश्च मे। उलूकः शशः। अग्निस्ते तेजः। यः पाप्मना गृहीतः॥

### न क्षपरः ॥ ३ ॥

क्षपरो विर्ज्जनीयः पूर्व्वविधिं न भजते। यथा, मनः

१ वायवस्थेति ख०। वायवस्थोपायवस्थेति ग०।

२ ये शुल्काः स्युरिति ग०।

३ इति वचनं सरलमिति ख०, इ० मु० च०।

४ यस्मादसावूष्मपर इति ख०, ग०, इ० मु० च।

चेमे(१)। उभयतः चणुर्भवति। घनाघनः चोभणः। पूर्व्वाङ्गैः चीयते। द्यौः चामा रेरिहत्(२)। ककारस्याघोषत्वात् प्राप्तिः(३)॥

## कपवर्गपरस्याग्निवेश्यवाल्मीक्योः॥ ४॥

चकारो निषेधाकर्षकः(४)। अग्निवेश्यवाल्मीक्योराचार्य्ययोर्मते(५) कवर्गपरः पवर्गपरो वा पूर्व्वविधिं न भजते(६)। यः कामयेत। अग्निः पशुरासीत्। ककारश्च पकारश्च कपौ(७) तयोर्वर्गौ कपवर्गौ, तौ परौ यस्मात् स तथोक्तः। एवम्पर इति किं। मधुश्च माधवश्च। नमस्तल्प्याय(८)। आशुः शिशानः। यः सोमं वमिति॥

## ऊष्मपर एवैकेषामाचार्य्याणां॥ ५॥

एकेषामाचार्य्याणां मते ऊष्मपर एव विसर्जनीयः पूर्व्वविधिं न भजते। यथा, आशुः शिशानः। एवकारेण किं। नमस्तल्प्याय(९)। यः कामयेत॥

## न प्लाक्षिप्लाक्षायणयोः॥ ६॥

कपवर्गपर ऊष्मपरश्च विसर्जनीयः प्लाक्षिप्लाक्षायणयोः

---

१ चेमेन्यासामिति ख०।

२ रेरिहद्दिति ग०।

३ चकारस्याघोषत्वात् प्राप्तिरिति ख०, इ० मु० च०। चकारस्याघोषवत्प्राप्तिरिति ग०।

४ निषेधमाकर्षतीति ख०,ग०,इ०मु०च।

५ अग्निवेश्यवाल्मीक्योः शाखिनोराचार्ययोर्मते इति ख०, ग०, इ० मु० च।

६ नापद्यते इति ख०, ग०, इ० मु० च०।

७ कश्च पश्च कपौ इति ख०।

८ मनस्तल्प्यायेति ख०।

९ नमस्तल्प्यायेति ख०।

पक्षे[1] न खलु पूर्व्वविधिं भजते । यः कामयेत । यः पाप्मना । आशुः शिशानः । एवम्पर इति किं । नमस्तस्वाय[2] । कप-वर्गादिसूत्रत्रयमनिष्टम् ॥

## ओकारमः सर्व्वोऽकारपरः ॥ ७ ॥

अः सर्वो विसर्जनीयः[3] ओत्वं भजते, अकारपरः । अः सर्व्व इत्यकारेण सहेत्यर्थः । प्रेद्धो अग्ने । समिद्धो अञ्जन् । सोब्रवीत् । अः सर्व्व इति किं । अन्यथा[4] समिद्धो अञ्जन्निति न सिद्ध्येत् । किन्तु वर्णस्य विकारलोपाविति विसर्जनीयमात्रस्य स्यादोत्वं । तत ओकारौकारपर इत्योकारे कृते ओकार आवमित्यावा-देशः[5] । तथासति समिद्धावञ्जन्निति स्यात् । किञ्च । अथ स्वर-परो यकारमिति यत्वं वा भजते[6] । तस्मिंश्च, लुप्यते लवर्ण-पूर्वाविति लुप्ते[7] परश्च परस्येति कार्य्यान्तराप्रसिद्धेः[8] समिद्धो अञ्जन्निति स्यात् । तन्माभूदिति अः सर्व्व इत्युक्तम्[9] ॥

---

१ पक्षेविपाचायक्वोः शाखिनोः पचे इति ख०, इ० मु० च ।

२ नमस्तस्थायेति ग० । मनस्तस्वा-येति ख० ।

३ अः पूर्वो विसर्जनीय इति ख० ।

४ ग, चिह्निते इ० मु० पुस्तके च अन्य-थेति पाठो नास्ति ।

५ आवमित्यादेश इति ग० ।

६ अञ्जन्निति स्यात् । यद्वा स्वरपरो यकारमिति यत्वं भवति इति ग०, इ० मु० च ।

७ लवर्णपूर्वौ यवकाराविति यकारे लुप्ते इति ग०, इ० मु० च ।

८ कार्यान्तराप्रसक्तेरिति ख० ।

९ तन्माभूदित्येवमर्थः, अः सर्व इत्यु-क्तमिति इ० मु० । तन्माभूदित्यपर्व इत्युक्तमिति ख० ।

## घोषवत्परश्च ॥ ८ ॥

'च'कार ओकारमः सर्वं चान्वादिशति। अः सर्वो[१] घोषवत्पर[२] ओत्वं भजते। यथा, मा नो मित्रो वरुणः[३]। ननु विधौ समाने पृथक्करणमनर्थकमिति चेत्। तन्माभूदिति अः सर्व इत्युक्तं[४]। उत्तरसूत्रे तुशब्दव्याख्याने[५] स्फुटीकरिष्यत इति परिहारः॥

## अवर्णपूर्व्वस्तु लुप्यते ॥ ९ ॥

अवर्णपूर्वो घोषवत्परो विसर्जनीयस्तु[६] लुप्यते। ह्रस्वपूर्वस्य विकार एव[७], दीर्घपूर्वस्य प्लुतपूर्वस्य च लोपः। यथा, देवा गातु विदः। विचिन्त्यः सोमा३ न विचिन्त्या३ इति। ओकारमः सर्वोकारपर इति अकारपरत्वं प्रत्यक्षन्तुशब्देन निवर्त्य अनुमानिकं[८], घोषवत्परत्वं परिगृह्यते, सान्निध्यात्। अस्यानुवर्त्तनमिवाभीष्टमत्रेति पूर्वसूत्रद्वयस्य पृथक्करणं[९]॥

---

१, अः पूर्व इति ख०।

२ परश्चेति ख०।

३ वरुणो अर्यमेति ख०।

४ ख०, ग०, चिह्निते इ० मु० पुस्तके च "तन्माभूदिति अः सर्व इत्युक्तं" इति पाठो नास्ति।

५ व्याख्यानेनेति ख०, ग०, इ० मु० च।

६ घोषवत्परस्तु विसर्जनीय इति ख०, ग०, इ० मु० च।

७ ह्रस्वपूर्वस्तु विकार एवेति क०। ह्रस्वपूर्वस्य ओकार एवेति इ० मु०।

८ आनुमानिकमिति ख०। आनुमानिकत्वमिति ग०।

९ पृथक्कारणमिति ग०।

## अथ स्वरपरो यकारम् ॥ १० ॥

'अथ' शब्दोऽधिकारार्थः(१)। स्वरपरो यस्मात् सोयं(२) स्वरपरः। इत उत्तरं(३) यदुच्यते स्वरपर(४) इत्येवं तत्र निमित्तत्वेनाधिकृतं ज्ञातव्यं(५)। सान्निध्यादवर्णपूर्व इति लभ्यते। स्वरपरो विसर्जनीयः(६) अवर्ण पूर्व्वो यकारमापद्यते। यथा, आप उन्दन्तु। ता अब्रुवन्। अन्वारभ्या३ इति। स्वरपर इति किं। आपो वरुणस्य। अवर्णपूर्व इति किं। अग्निरेकाक्षरेण॥

## एकारोऽयम् ॥ ११ ॥

विसृष्टो विसर्गः(७)। इदमिदानीमुच्यते, स्वरपरः पदान्त एकारः, अयं(८) विकारमापद्यते। इम एवास्मै। त एनं भिषज्यन्ति॥

## ओकारोऽवम् ॥ १२ ॥

स्वरपरः पदान्त ओकारः, अवं(९) विकारमापद्यते। विष्णवे हीदं॥

---

१ शब्दोधिकारपर इति ख०।

२ स्वरपरो यस्मादसाविति ख०। स्वरः परो यस्मादसाविति ग०, ढ० मु० च।

३ इतः परमिति ग०।

४ तत्र स्वरपर इति ख०।

५ वेदितव्यमिति ग०, ढ० मु० च।

६ विसर्ग इति ख०।

७ विसर्गो निवृत्त इति ख०। विसृष्टो विसर्गः स्पर्शनीय इति ग०। विसृष्टो विसर्जनीय इति ढ० मु०।

८ एकारः, अयमिति इति ग०, ढ० मु० च०।

९ अवमितीति ढ० मु०।

## नाकारपरौ ॥ १३ ॥

द्विवचनसामर्थ्यग्रहीतौ[१] सन्निहितावैकारौकारौ अकारपरौ पूर्वविधिं नाप्नुतः[२]। यथा, मा ते अस्यां। समिद्धो अञ्जन्। तेऽब्रुवन्। इत्यादौ एकारोयं, लुप्यते त्वकार एकारपूर्व इति[३] सूत्रद्वयं प्रसक्तं। तत्रापि पूर्वत्वात् प्रबलं यत्वविधिं निषेद्धुमयमारम्भः। अकारः परो याभ्यां तावकारपरौ॥

## ऐकार आयं ॥ १४ ॥

स्वरपरः पदान्त ऐकारः, आयं विकारमापद्यते। यथा, आसामहा एवैमौ द्वादशौ मासौ॥

## औकार आवम् ॥ १५ ॥

औकारः पदान्तः[४] स्वरपर आवं विकारमापद्यते। यथा, अहावनदता हते॥

## उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे ॥ १६ ॥

अपृक्तसञ्ज्ञक उकारः स्वरपरः प्रकृत्यावतिष्ठते। अविकृतो भवतीत्यर्थः। उकारस्वरयोरन्तरे वकारश्चागमो भवति। यथा, स उ एकविꣳशवर्त्तनिः। अदब्ध्युवेवास्य मनुष्याः। अपृक्त इति किं। स्वपत्याय देव। उकार इति किं। भिन्धेहि[५]॥

---

१ द्विवचनसामर्थ्यादिति ख०, ग० च।
२ न प्राप्नुत इति इ० मु०।
३ पूर्वे ओकार इतीति ख०।
४ पदान्ते इति ग०।
५ भन्धेहि इति ख०, ग०, इ० मु०च।

## न तत् तस्मात् साꣳहितः ॥ १७ ॥

तत्,तस्मात्, इत्येताभ्यां सांहित उकारोऽपृक्तः पूर्वविधिं न भजते([1]), प्रकृत्या अवस्थानं, वकारागमश्च([2]) न भवतीत्यर्थः। ([3])तद्वाहुक्तृज्यं। तस्माद्वाश्वं। इवर्णाकारौ यवकाराविति दशमेऽस्य विधिर्वक्ष्यते([4])। तत् तस्मात् साꣳहित इति किं। तत्, उ, आहु, तदु, उवाहु,([5]) तस्मादु, उवाश्वं ॥

## ह्रस्वपूर्व्वो ङकारो द्विवर्णं ॥ १८ ॥

स्वरपरो ङकारः पदान्तवर्त्ती ह्रस्वपूर्वो द्विवर्णं द्वित्वं भजते([6])। यथा, न्यङ्ङग्निः त्वा दध्यङ्ङृषिः। ह्रस्वपूर्व इति किं। पराङावर्त्तते। स्वरपर इति किं। सहङ्क् समानैः प्रत्यङ् षडहः([7])। ह्रस्वः पूर्व्वो यस्मादसौ ह्रस्वपूर्व्वः। द्वयोर्वर्णयोः समाहारः, द्विवर्णं ॥

## नकारश्च ॥ १९ ॥

'च'कारः पूर्वनिमित्तं द्वित्वं चान्वादिशति([8])। ह्रस्वपूर्व्वो नकारो द्विवर्णं भजते स्वरपरः। निरवपन्निन्द्राय। अब्रुव-

---

१ नाप्नोतीति ग०, इ० मु० च। न प्राप्नोतीति ख०।

२ वकारस्येति ग०, इ० मु० च।

३ अश्ववादिन इति ख०, चिह्नितेऽधिकः पाठः।

४ दशमे तस्य विधिर्वक्ष्यते इति ग०। उकारस्य विधिर्वक्ष्यते इति ख०।

५ आऊवतद्वृज्यमिति ख०, ग० चिह्नितपुस्तकेऽधिकः पाठः।

६ द्विवर्णं भजते इति ग०,इ०मु० च।

७ प्रत्यङ् चडह इति ग०।

८ चाकर्षतीति ख०।

नृम्णवत्। एवम्पर इति किं। निरवपन् यान्येव पुरस्तात्(१)। आमन्वतीते(२)। एवम्पूर्व्व इति किं। यानग्नयोन्वतप्यन्त। विद्वानेतमग्निं चिनुते॥

**अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णीयेष्वीकारोकारपूर्वो रेफमाकारपूर्वस्य यकारम्॥ २०॥**

ग्रहोख्यादिषु विषयेषु ईकारपूर्व ऊकारपूर्व्वो वा चकारात्क्षष्टो नकार इतीत्येतस्मादन्यस्वरपरो(३) रेफमापद्यते, अकारपूर्वस्येद्यकारं। ग्रहो नाम चतुरोन्त्यानुवाकान्(४) वर्जयित्वा आददे ग्रावेति प्रश्नः, अग्निकाण्डस्याद्यं प्रश्नद्वयम्, उत्तमानुवाकवर्जम्, उख्यम्, इत्याख्यायते(५)। उक्ता याज्याः, समिद्दिशां जीमूतस्य, यदक्रन्दः, मा नो मित्रः, ये वाजिनम्, अग्नेर्मन्वे, समिद्धो अञ्जन्, गायत्री, कस्त्वा, इत्यनुवाकनवकं पृष्ठ्यमिति पठ्यते(६)। हिरण्यवर्णा इत्यनुवाकः(७) हिरण्यवर्णीयः। ग्रहे यथा(८), जहि शत्रूंᳵ रपरमृधः, मरुत्वाᳵ इन्द्रः(९)। उख्ये यथा, ये वा वनस्पतीᳵ रनु, मधुमाᳵ अस्तु सूर्य्यः। याज्यासु

---

१ पुरस्ताद्ग्रचांसीति ग०।

२ ओमन्वतीनेस्मिन्निति ख०, ग० च।

३ नकारः, अनितिपर इति भिन्नस्वरपर इत्यर्थः। इतीत्यस्मादन्यस्वरपर इति ख०। नकारोनितिपर इतिव्यतिरिक्तस्वरपर इति इ० मु०।

४ चतुरनुवाकान् इति ग०। चतुरोनुवाकानिति इ० मु०।

५ उत्तमानुवाकवर्जितमुख्यमित्युच्यते इति ख०। उत्तमानुवाकवर्जमुख्यमाख्यायते इति ग०, इ० मु० च।

६ पृष्ठ्यमित्युच्यते इति ख०।

७ इत्यनुवाके इति ग०।

८ ग्रहो यथेति ख०, ग० च।

९ मरुत्वां इन्द्र वृषभ इति ख०,ग० च।

यथा, ऋतूᳶ ऋतु पते(१) अमवाᳶ इभेन। पृष्ठे यथा, शत्रूᳶ रनपव्ययन्तः, जघन्याᳶ(२) उपजिघ्रते। हिरण्यवर्णीये यथा, अग्निᳶ रप्सु षदः सर्व्वाᳶ अग्नीन्। अनितिपर इति किं। अभ्यवर्त्तन्त दस्यून्, दस्यूनिति दस्यून्। इडावानितीडावान्। ग्रहादिष्विति किं। त्रीनिमाᳶ लोकानिति। पशूनेवावरुन्धे। तानिन्द्रोन्तर्य्यामेणान्तरधत्त। इतिपरो यस्मादसाविति परः, न इति परः, अनितिपरः॥

**मर्त्यानुदयानमृतान्दुर्य्यानसोमपूर्वःसोऽस्मानविमान्-गोमान्मधुमान्हविष्मान्कृतमनार्षेचिकित्वानिडावान्कक्षी-वान्वाणवान्हिपयस्वान्वशान्विदत्रानमित्रानरान्पोषान्म-हाᳶश्च॥ २१॥**

मर्त्यान्, उदयान्, अमृतान्, दुर्य्यान्, असोमपूर्व्वः सो अस्मान्, अविमान्, गोमान्, मधुमान्, हविष्मान्, कृतमनार्षे, चिकित्वान्, इडावान्, कक्षीवान्, वाणवान्, हि पयस्वान्, वशान्, विदत्रान्, अमित्रान्, अरान्, पोषान्, महान्, एतेषु ग्रहणेषु नकारोऽनितिपरो यकारमापद्यते। अनितिपरत्वाकर्षकोयं 'च'कारः। विषयाननाहत्य सर्वार्थोयमितः परमारम्भः(३)। यथा, मर्त्याᳶ आविवेश। उदयाᳶ अजस्रं। उदिति किं। वयोभिरेवायानवरुन्धे। उदस्थामसृताᳶ अनु। भद्रान्दुर्य्याᳶ

१ ऋतूं ऋतुपते यजेहेति ख०। २ अघन्यां उपजिघ्रते इति ग०। ३ सर्वार्थोयमित्ययमारम्भ इति ग०।

अभ्येहि। न सोमपूर्वः, दुर्ध्यान्, इत्यत्र नकारः सोमपूर्वो यत्वं नापद्यते। प्रचरा सोम दुर्ध्यानदित्याः। सो अस्माꣳ अधिपतीन् करोतु। सो इति किं। इन्द्रो अस्मानस्मिन्(१)। अविमाꣳ अश्वो। गोमाꣳ अग्ने। मधुमाꣳ इन्द्रियावान्। अविगोमध्विति किं। पशुमानेव भवति। हविष्माꣳ आविवासति। हुतमानार्षे, हुतमानित्यत्र नकार आर्षे स्वरपरे यत्वं भजते(२)। देवहूतमꣳ इत्युखायां(३)। आर्षे इति किं। देवहूतमानिति देवहूतमान्। आर्षग्रहणसामर्थ्यादितिपरत्वेपि यत्वं भवति। आर्षे इति काकाक्षिवदुभयत्र(४) सम्बध्यते, ग्रहोक्यादिमहान्पर्यन्तं। आर्षः स्वयम्पाठ इत्यर्थः। चिकित्वाꣳ अनुमन्यतां इडावाꣳ एषः। कक्षीवाꣳ औशिजः। विशल्यो बाणवाꣳ उत। इडाकक्षीवाणेति किं। करोति रसवानेव भवति(५)। असृग्महि पयस्वाꣳ अग्ने(६)। ह्नीति किं। ऊर्जस्वान् पयस्वानित्याह। आर्ष इति-परत्वाद् देवहूतमाꣳ इत्युखायां जुहोतीतिवद्यत्वप्राप्तिर्हिग्रहणेन प्रतिषिध्यते(७)। स्तुतो यासि वशाꣳ अनु। सुविद्वाꣳ अपि(८)। अमित्वाꣳ अपबाधमानः। अराꣳ इवाग्ने(९)। पोषाꣳ अपुष्यन्। अग्ने महाꣳ असि॥

---

१ यस्मानस्मिन्निति ख०।

२ आर्षे स्वरपरे यत्वं भवति इति ग०। आर्षस्वरपरे यत्वं भजते इति ख०। आर्षे स्वरे परे यत्वमापद्यते इति द० मु०।

३ इत्युखायां जहोति इति ख०।

४ काकाक्षिन्यायेनोभयत्रेति द० मु० पुस्तकधृतपाठान्तरम्।

५ करोतीति ग० चिह्निते नास्ति।

६ अग्न आगममिति ख०।

७ निषिध्यते इति ग०,द० मु० च।

८ सुविद्वा अपि तथमेनेति ख०।

९ स्वाग्नेर्नेमिर्देवानिति ग०।

इन्द्रोमेऽकरूद्ध्वमिहाप्येत्वगन्मेडेन्यानायजिष्ठआचत्वकुर्व-
तादुह्वदद्दितिरग्रेऽधरान्त्सपत्नानलम्परश्च ॥ २२ ॥

इन्द्रो मे, अकः. ऊढ्व, इहा, अप्येतु, अगन्म, इडेन्यान्, आयजिष्ठ, आच, ऋतु, अकुर्वत, अदुहत्, अदितिः, अग्रे, अधरान् सपत्नान्, अलं, इत्येवम्परो नकार आकारपूर्वो यकारमापद्यते(१)। 'च'कार आकारपूर्वत्वाकर्षकः। यथा, सपत्नाꣳ इन्द्रो मे। मे इति किं। युष्मानिन्द्रो वृणीतः। नियाभेणाधराꣳ अकः। यूयं देवाꣳ ऊढ्वम्। अग्ने देवाꣳ इहावह। दीर्घेण किं। यज्ञियानिह यान् हवामहे। घर्म्मो देवाꣳ अप्येतु। एत्विति किं। विद्वानपि जन्येषु(२)। सुवर्द्देवाꣳ अगन्म। ईडामहे देवाꣳ इडेन्यान्। देवाꣳ आयजिष्ठ स्वस्ति। देवाꣳ आचचत्। यजिष्ठश्चेति किं। यानावह उशतः। वाजो देवाꣳ ऋतुभिः,(३)। वि त्वा कामाꣳ अकुर्वत। यज्ञोऽसुराꣳ अदुहत्। विवस्वाꣳ अदितिः। अग्निस्ताꣳ अग्रे। अन्याꣳ अधरान् सपत्नान्। सपत्नानिति किं। भ्रातृव्यानधरान् पादयामि। पुरोडाशाꣳ अलङ्कुर्व्विति। अन्वादेशः किमर्थः। परिधीनकुर्व्वत। तत्तत्पदग्रहणे कर्त्तव्ये परपदग्रहणम्, अनार्षेपि संहिताविधानग्रहणस्य च(४) यत्वं स्यात् इति, नैमित्तिकस्य च निमित्तापेक्षत्वात्। ग्रहणस्य यथा, अमर्त्यो मर्त्याꣳ आविवेश, आवि-

---

१ यत्वमापद्यते इति ग०, इ० मु० च। ३ येभिर्देवा ऋतुभिरिति ख०।
२ जन्येषु भवतीति ख०। ४ संहिताविधावग्रहणस्य चेति इ० मु०। संहिताविधानस्य चेति ग०।

वेशामर्त्याꣳ अमर्त्यं आविवेश। उर्दस्थामम्रताꣳ अनु, अम्रताꣳ अन्वम्रताꣳ अनु। एवं नैमित्तिकग्रहणस्य। अग्नेविमाꣳ अविमाꣳ अग्ने(¹)। उदयाꣳ अजस्रं, उदयाꣳ अयाꣳ उदयान्(²)। एवं ग्रहणस्य नैमित्तिकस्य(³)। अग्निस्ताꣳ अग्ने ताꣳ अग्निः। अन्याꣳ अधरान्, अन्याꣳ अधराꣳ अधराꣳ अन्याꣳ अधरान्(⁴)। एवं सर्वत्र नकारस्य यकारोत्पत्तिर्द्रष्टव्या॥

न रश्मीन्च्छ्रपयान्यमान्पतङ्गान्त्समानानर्वान्यजी-यान्॥ २३॥

रश्मीन्, अपयान्, यमान्, पतङ्गान्, समानान्, अर्वान्, यजीयान्, एषु(⁵) ग्रहणेषु नकारः स्वरपरोपि न खलु रेफं वा यकारं वा भजते(⁶)। यथा, पुरुवा च रश्मीननु। अदितिः अपयानिति। उभ्यत्वादनयोः प्राप्तिः। ननु अदितिः अपयानित्यस्य(⁷) इति परत्वादेव निषेधे सति ग्रहणमनर्थकमिति-

---

१ अग्ने विमां अविमां अग्नेग्ने विमान् अमृतां अन्वन्वमृतां अमृतां अनु इति ग०। अग्ने विमां अग्नौ अविमां अग्ने इति क०। अग्ने विमां अग्नौ अविमान् अग्ने तथा अग्ने-विमां अविमां अग्ने विमान् अविमा अग्ने इति इ० मु०।

२ उदया अजस्रं, अया अजस्रं, अजस्रमजस्रमया अया अजस्रं, उदया अया उदयान् इति ख०।

३ एवं ग्रहणनैमित्तिकस्येति ग०,इ०मु०च,

४ अग्निस्ता अग्ने ता अग्नेग्ने तां तान् ता अग्निः। अन्या अधरान् सपत्नान् अन्या अधरानधरानन्या अन्या अधरा-निति ख०। तां अग्नेग्ने तांस्तां। अन्यां अधरां अधरानन्यां अधरान् इति ग०।

५ एतेष्विति ग०, इ० मु० च।

६ स्वरपरोपि रेफयकारं नापद्यते इति ख०। स्वरपरोपि न खलु रेफं यकारं वा भजते इति ग०, इ० मु०, च।

७ अपयानस्येति इ० मु०।

चेत् । आर्षं इतिपरत्वात् पुनः प्राप्तिः । तन्माभूदिति ब्रूमः । सुयमानूतये[१], पृष्ठ्यत्वात् प्राप्तिः । पतङ्गानसन्दितः । याज्यात्वात् प्राप्तिः । समानानुसन्नम्ने । अर्वाञ्चमिन्द्र ग्रावाणः । यजोयानुपस्थे मातुः[२] । एषामपि सैव प्राप्तिः ॥

## उद्यथापरश्चोद्यथापरश्च ॥ २४ ॥

उत्, यथा, इत्येवम्परो नकारो यथाविहितं रेफं यकारं वा नापद्यते । यथा, अमित्रानुन्नयामि । उदिति किं[३] । त्रीᳬ२ रुतयून् । विद्वानथा भव । दीर्घाऽत्र ह्रस्वोपलक्षणमपि[४] यथा, विद्वानथा भव । यथासंहितास्थमेव निमित्तमत्र कार्यं[५] करोति निषेधरूपं । यथा, अमित्रानुदुद्रमित्वाᳬ अमित्रानुत् । विधिरप्येवं । यथासंहितास्थनिमित्त एवं[६] सर्वत्र भवतीत्यवोचाम[७] । यथा, सो अस्माᳬ अस्मान्त्सो अस्मान् । अस्माᳬ अवहायावहायास्मानस्माᳬ अवहाय । एवमादि वेदितव्यम् ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे नवमोऽध्यायः ॥ * ॥

---

१ सुयमानूतये इत्यत्रेतिख० ।
२ यजोयानुपस्थे मा तु इति ख० ।
३ हल्माचेण किमिति ग०, इ० मु० च ।
४ यथेति ह्रस्वोपलक्षणमपि इति ख० ।
५ निमित्तं स्वकार्यमिति इ० मु० । निमित्ते स्वकार्यमिति ग० । निमित्तमत्र स्वकार्यमिति ख० ।
६ यथासंमितास्थनिमित्तैरेवेति ख० ।
७ भवत्यतोवोचामेति ग०, इ० मु० च ।

# अथ दशमोऽध्यायः ।

## अथैकमुभे ॥ १ ॥

'अथ' इत्ययमधिकारः । उभे अक्षरे एकं रूपं सजातीयमापद्यते इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यक्ष्यामः ॥

## दीर्घꣳ समानाक्षरे सवर्णपरे ॥ २ ॥

समानाक्षरे आत्मनः सवर्णपरे सति पूर्व्वापरीभूते एते उभे दीर्घमेकमाप्नुतः । यथा, एह्रीष्वान्तरितं(१) । राज्ञासीन्द्रियाण्यै(२) । सूपस्थादेवः(४) । सवर्णं परं यस्मात् तत्, सवर्णपरम्, तस्मिन् ॥

## अथावर्णपूर्वे ॥ ३ ॥

'अथ' इत्ययमधिकारः । अवर्णपूर्वे सतीत्येतदधिकृतं वेदितव्यं, इत उत्तरं यक्ष्यामः । इदमधिकारान्तरम्, उपसर्गपूर्वं आरम्, इतिपर्य्यन्तं । अवर्णश्चासौ पूर्वश्च अवर्णपूर्वः, तस्मिन् ॥

---

१ त्वचं एह्रीष्वान्तरितं रक्ष इति इ० मु० ।

२ साज्ञासीन्द्राण्यै सन्नरमिति ख० ।

राज्ञासीन्द्राण्ये इति ग०, इ० मु० च ।

४ सूपस्था देवो वनस्पतिरिति इ० मु० ।

## इवर्णपर एकारं ॥ ४ ॥

अवर्णपूर्व्वं इवर्णपरे च सति, उभे[१] अक्षरे एकारमाप्नुतः । नेष्टिभंवति ।*[२], इवर्णश्चासौ परश्च इवर्णपरः, तस्मिन् ॥

## उवर्णपर ओकारं ॥ ५ ॥

अवर्णपूर्व्वं उवर्णपरे च सति, ते उभे[३] ओकारमाप्नुतः । इषे त्वोर्जे त्वा ॥

## एकारैकारपर ऐकारं ॥ ६ ॥

अवर्णपूर्व्वं एकारैकारे च परे सति ते उभे[४] पूर्व्वापरीभूते ऐकारमाप्नुतः । सं ब्रह्मणा पृच्यस्वैकताय[५] । सोमैन्द्राबभ्रुललमास्तूपराः । एकारश्च ऐकारश्च एकारैकारौ, तयोः समाहारः, एकारैकारं । समाहारे द्वन्द्वः । तच्च तत् परञ्च एकारैकारपरं, कर्म्मधारयः । तस्मिन्, एकारैकारपरे । एवमुपरितनेपि सूत्रे समासः ॥

## ओकारौकारपर औकारं ॥ ७ ॥

अवर्णपूर्व्वं ओकारौकारे परे च सति, ते उभे[६] औकारमाप्नुतः । ब्रह्मौदनं पचति । दाम्नापौम्भन् ॥

---

१ ते उभे इति इ० मु० ।

२ महेन्द्रायेति इ० मु० पुस्तकेऽधिकपाठः ।

३ ते उभे अक्षरे इति ग०, इ० मु०च ।

४ उभे अक्षरे इति ग०, इ० मु० च ।

५ पृच्यस्वैकताय स्वाहेति ख०, इ० मु० च ।

६ उभे अक्षरे इति ग०, इ० मु० च ।

## अरमृकारपरे ॥ ८ ॥

अवर्णपूर्वे ऋकारपरे च सति ते उभे(१) अरमिति विकारमाप्नुतः। अर्धर्च एकां(२)। आग्नेय्यर्चाग्नीध्रमतिमृशेत् ॥

## उपसर्गपूर्व आरं ॥ ९ ॥

अवर्णपूर्व इत्यनुवर्त्तते। तस्मादुपसर्गपूर्व इत्यविशेषोक्तावथावर्णान्तीयमुपसर्गस्तस्यैव ग्रहणं(३)। ऋकारः सान्निध्याल्लभ्यते। उपसर्गपूर्वे ऋकारपरे च सति उभे(४) आरमिति विकारमाप्नुतः। उपार्च्छति(५)। अवार्च्छति। ऋतव्या उपोपार्त्तव्या ऋतव्या उप। अवर्णान्त उपसर्गविशेषणेन किं। व्यृद्धं वा एतत्। उपसर्गश्चासौ पूर्वस्तस्मिन्, उपसर्गपूर्वे(६) ॥

## उदात्तमुदात्तवति ॥ १० ॥

उदात्तधर्म्मविशिष्टे वर्णे पूर्व्वतः परत उभयतो वा स्थिते उभे(७) अप्येकादेशमापन्न उदात्तधर्म्ममाप्नुतः(८)। उदात्तोऽस्यास्तीत्युदात्तवान्, तस्मिन् उदात्तवति। समानाक्षरमारभ्य सर्व्वस्यैकीभावे(९) यथाक्रममुदात्तानुदात्तस्वरितपूर्वे उभयोरु-

---

१ उभे अक्षरे इति ग०, इ० मु० च।

२ एकां दध्यादिति ख०।

३ इत्यविशेषवर्णान्तोक्तावर्णान्तीयमुपसर्गस्तस्यैव ग्रहणमिति इ० मु०। इत्यवधिविशेषोक्तावथवर्णान्तोयमुपसर्गस्तस्यैव ग्रहणमिति ख०।

४ ते उभे अक्षरे इति इ० मु०।

५ उपार्च्छत्यथ क इति ख०।

६ उपसर्गश्चासौ पूर्वश्च उपसर्गपूर्वः, तस्मिन् उपसर्गपूर्वे इ० मु०। उपसर्गश्चासौ पूर्वश्च स तथोक्तः, तस्मिन् उपसर्गपूर्वे इति ख०।

७ स्थिते सति ते उभे इति ख०, इ० मु० च।

८ उदात्तधर्ममेकमाप्नुत इति ख०।

९ सर्वस्मादेकीभावे इति ख०, ग० च।

दात्ते चोदाहरणानि[१] दर्शयिष्यामः। सविता प्राप्पर्यतु। सुचार्पयति। ब्रह्म यच्छापाग्नेग्निं। याज्यैवैनं। पूषाधत्त। दिवीव चक्षुः। अद्य वसु वसतीतीन्द्रो हि देवानां। मैत्रावरुणीत्याह। ननु सूत्रीयमित्यत्रोदात्तेनैकादेशे सति किं न स्यात् अयं विधिः। उदात्तपूर्व्वाधिकारे[२] सत्युभावे चेति सूत्रेण स्वरितस्य विशेषविधानादिति ब्रूमः। रेतो दधातूसक्थ्योः[३]। वनस्पतयोनूत्तिष्ठन्ति। ता दिक्षूपादधत। एवं समानाक्षरसंहितायामेकीभावोऽन्यत्रापि द्रष्टव्यः। एवमवर्णपूर्व्वत्वेऽपि वक्ष्यते। सेमान्नो हव्यदातिं[४]। तं यद्दग्निः[५]। कार्य्येति सवनमुखान्[६]। सेदु होतः प्रोक्षितं गोपायत। ऊर्ज्जस्थोर्जं बीभत्सीयेति। स्वायुषोदोषधीनां। इमे एवोपधत्ते। नैनं प्रत्योषति। एक एव यजेतैकः। अथैकमुत्थानं। यत्रैकाष्ट रशनां। इन्द्रियमेवैन्द्रेण। विहितदेवैर्यतेति। देवेभ्य ऐन्धं[७]। क्षत्रस्य चौजसे[८]। स्वाहौषधीभ्यः। सौषधीरनुरुध्यसे[९]। प्रौचीः केन[१०]। वरुणो ह स्वाहोपवेशिः। आग्नेय्यर्चाग्नीध्रं। सैवार्द्धिः। ऐन्धविरष्टुतः। एवविरस्वदयत्। आर्त्तिमार्च्छति। अवर्च्छत्येवं[११]। एवमादि॥

---

१ वोदाहरणानीति ग०, इ० मु० च।
२ उदात्तपूर्वस्याधिकारे इति ख०।
३ दधातूत्सक्थ्येरिति ख०। दधातूत्सक्थ्येम इति ग०।
४ हव्यदातिं जुषाण इति ख०।
५ यद्दग्निर्धावतीति ख०।
६ सवनमुखे सवनमुखे कार्येतीति ख०, ग० च।
७ देवेभ्य ऐधेधं देवेभ्यो देवेभ्य ऐन्धेति ख०, ग० च।
८ त्वौजसे इति ख०, ग० च।
९ स्वौषधीरनुरुध्यसे इति ख०।
१० हविषो प्रैचीरितिति ख०। प्रैचीः केनाप इतीति ग०।
११ अवार्च्छत्येवमवारमिति ग०।

**अनुनासिके अनुनासिकं ॥ ११ ॥**

अप्रग्रहाः समानाक्षराण्यनुनासिकानीत्येषां मतमुद्दिश्यायं विधिः(१)। अस्मिन्(२) उदात्तवत्यनुनासिके पूर्वतः परत उभयतो वा स्थिते सति ते उभे अप्यक्षरे अनुनासिकं धर्म्ममेकमाप्नुतः। उक्तान्येवोदाहरणानि। एतदनिष्टं॥

**स्वरितानुदात्तसन्निपाते स्वरितं ॥ १२ ॥**

स्वरितानुदात्तयोः सन्निपाते एकादेशे सत्युभावपि तौ स्वरितमापद्येते। यथा, कन्येव तुन्ना। क्वीं क्व्योपाकृताय। याज्यैषा वै सप्तपदा(३)। अथ क्वास्य(४)। इह स्वरितस्याविशेषेण ग्रहणे नित्यस्वरित एव गृह्यते। तस्य संव्यञ्जनानामक्षराणाञ्च(५) पदावयवानामुत्पत्तिकाल एव सम्भवात्। अन्येषाञ्च(६) पदोत्पत्तिकालादूर्द्ध्वमक्षराणां पदानाञ्च संहितायामुदात्तात् परोनुदात्त इति विधानात्। तस्मिन्ननुदात्ते पूर्व उदात्त इत्यादि(७)। तस्मान्नित्यस्यैव मुख्यत्वम्। सामान्योक्तौ च सत्यां मुख्ये सम्प्रत्यय इति तस्यैव स्वीकारो युक्तः। अथाब्रवीदित्यादावेकादेशस्योदात्तानन्तरभावित्वादुदात्तात्परोऽनुदात्तस्वरितमिति अनेनैव स्वरितत्वं विज्ञेयं॥

---

१ अनुनासिकान्येकेषामित्येकेषां मतम्। तानुद्दिश्यायं विधिरिति इ० मु०। अनुनासिकानीत्येषां मतं तदुद्दिश्यायं विधिरिति ग०।

२ तस्मिन्निति इ० मु०।

३ सप्तपदा शक्वरी इति ग०।

४ क्वास्याहवनीय इति ग०।

५ स्वरितव्यञ्जनानामक्षराणाञ्चेति ग०। स्वरितस्य व्यञ्जनानामक्षराणाञ्चेति इ० मु०।

६ अन्येषान्तु इति ग०, इ० मु० च।

७ उदात्तस्वरितमित्यादि चेति ग०, इ० मु० च।

## न धामापासिपरौ बुध्नियाज्यापूषामिनन्तार्षे ॥ १३ ॥

धा, मा, पा, एष्वन्त्यस्वर आर्षपाठकाले(१) असिपरः, बुध्नियाः, ज्या, आ, पूषा, अमिनन्त, एष्वन्त्यस्वर(२)आर्षे स्वरपरः पूर्वविधिं न प्राप्नोति। यथा, स्वधा अस्युर्वी। सहस्रस्य प्रमा असि। धन्वन्निव प्रपा असि। असि पर इति किं। स्वधेति स्वधा। प्रमेति प्रमा। प्रपेति प्रप(३)। आर्ष इति किं। स्वधा अस्यसि स्वधा स्वधासि। एवमादि। प्रपा अस्यसि प्रपा प्रपासि। प्र बुध्निया ईरते। ज्या इयं(४)। आ पूषा एत्वावसु। आकारः किमर्थः। तं पूषाधत्त। आ ते सुपर्णा अमिनन्त(५)। आर्षस्वरपर इति किं। बुध्निया ईरत ईरते बुध्निया बुध्नियेरते। ज्या इयमियं ज्या इयम्। आ पूषा पूषा पूषा। पूषा पूषा एत्वितु पूषा पूषैतु। अमिनन्त एवैरेवैरमिनन्तामिनन्तेवैः। आर्षेयस्वरपर(६)इति किं। असि स्वधा स्वस्यसि स्वधा। सुपर्णा अमिनन्तामिनन्त सुपर्णाः सुपर्णा अमिनन्त। इदमेव प्रत्युदाहरणं। ननु ज्येयममिनन्त वैरित्यादिजटायामपि तृतीयपर्य्यायस्य प्रकृतित्वात्। पूषा एत्वितु पूषा पूषैतु। अमिनन्त एवैरमिनन्तामिनन्त एवैः। आ पूषा पूषा पूषा(७) ॥

## एष्टरेतनेमन्नोह्मन्नोष्ठेवःपरौ लुप्यते ॥ १४ ॥

एष्टः, एतन, एमन्, ओह्मन्, ओष्ठ, एवः, इत्येवम्परौ अवर्णौ

---

१ आर्षे पाठे इति इ० मु०।

२ एतेष्वन्त्यस्वर इति इ० मु०।

३ स्वधेति स्वऽधा। प्रमेति प्रऽमा। प्रपेति प्रऽपा इति ग०।

४ धन्वन् ज्या इयं मिति इ० मु०।

५ अमिनन्त एवैरिति ग०।

६ आर्षस्वरपर इति इ० मु०।

७ आपषा इत्यारभ्य अमिन्त एवैरिति पाठो ग०, चिह्नितपुस्तकेनास्ति। इ० मु० पुस्तकेच्छतु आपूषेत्यारभ्य सर्वस्वरमपाठो नास्ति। तत्र केवलं पूषा अमिनन्त इत्युदाहरणद्वयमेवास्ति।

लुप्यते। अथावर्णपूर्व्वं इत्यनुवर्त्तमानादवर्णं[१] इति लभ्यते। अग्नीयेष्टा रायः। शमितार उपेत न। अपान्त्वेमन्त्सादयामि-त्यपान्त्वोग्नन्त्सादयामि। स्वाहोष्ठाभ्यां। ओष्ठशब्दस्य सर्व्वावस्थस्य ग्रहणं भवति, ग्रहणस्येति[२] वचनात्। उपयाममधरेणोष्ठेन। निरमिमतेवश्छन्दः। अवर्णो लुप्यत[३] इति किं। शित्योष्ठः शितिभ्रुः। शित्योष्ठाय स्वाहा॥

## इवर्णोकारौ यवकारौ॥ १५॥

अवर्णपूर्व्वोऽधिकारो निवृत्तः। स्वरपराधिकारस्तु वर्त्तते। अथ स्वरपरो यकारमिति पूर्व्वाध्याये प्रक्रान्तः। इवर्णोकारौ पदान्तौ स्वरपरौ यथासङ्ख्येन यकारवकारावापद्येते[४]। अभ्यस्थात्। भवोत्यश्यामः[५]। आ पूषा एत्वावसु। दीर्घस्य प्रग्रहत्वविधानात्[६] प्लुतस्य[७] सन्धिनिषेधात्, उकारस्य कारोत्तरत्वं कृतम्, इवर्णोकारौ यवकाराविति॥

## उदात्तयोश्च परोऽनुदात्तः स्वरितं॥ १६॥

'च'कारः पूर्व्वसूत्रोक्तनिमित्तिनाविवर्णोकारावन्वादिशति। उदात्तयोरिवर्णोकारयोः परोऽनुदात्तः[८] स्वरितमापद्यते। व्यैवेनेन। अप्स्वग्ने। उदात्तयोरिति किं। नोचातं धत्त्यतसं।

---

१ इत्यनुवर्त्तनादवर्ण इति ग०, इ० मु० च।

२ ग्रहणस्य चेति इति ग० इ० मु० च।

३ अवर्णपूर्वो लुप्यते इति ग०।

४ यवकारावापद्येते इति इ० मु०।

५ अत्यश्यामेति ग०, इ० मु० च।

६ प्रग्रहधानादिति ग०।

७ तस्येति ग०।

८ परोनुदात्तयोश्चेति ग०। परोनुदात्तश्चेति इ० मु०।

मध्वग्नौ जुहोति। परोऽनुदात्त इति किं। तद्यद्दृच्यध्यच्चराणि(१)। सत्वै यजेत। इध्वानं उपस्तीर्णं(२)॥

## ऊभावे च॥ १७॥

'च'कारः पूर्व्वस्योदात्तत्वान्वाकर्षकः(३), परस्य चानुदात्तत्व-मन्वादिशति। पूर्व्वेणोदात्तेन परस्य चानुदात्तस्य(४) ऊभावे क्रियमाणे स्वरितं जानीयात्। यथा, सून्नीयमिव। सून्नाता। मा सूत्तिष्ठन्। दिव्यूपदधाति। पूर्व्वेणोदात्तेनेति किं(५)। सूपस्थादेव। परस्यानुदात्तस्येति किं(६)। ता दिव्यूपाद-धतत॥

## न श्येतौ मिथुनौ॥ १८॥

श्येतौ, मिथुनौ, इत्येतयोरन्त्यस्वरो यथाविहितं(७) नापद्यते। यथा, श्यैतेन श्येतौ अकुरुत। मिथुनौ(८) अभवन्॥

## लुप्येते त्ववर्णपूर्व्वौ यवकारौ॥ १९॥

अवर्णपूर्व्वौ स्वरपरौ यकारवकारौ लुप्येते। यथा, आप उन्दन्तु। ध्रुवा अस्मिन् गोपतौ स्यात्। न विचिन्त्या३ इति। इम एवास्मै। आसामहा एवेमौ। अवर्णपूर्व्व इति किं। वाय-

---

१ तद्यद्‌च्याच्चराणि इति क०।

२ इध्वा उपस्तीर्णमिच्छन्ति इति इ० मु०। इध्वा उपस्तीर्णमिच्छंढढन्ति इति ग०।

३ पूर्वोदात्तत्वान्वाकर्षक इति इ० मु०।

४ परस्यानुदात्तस्येति ग०, इ० मु० च।

५ पूर्वेणोदात्तेन किमिति ग०,इ०मु०च।

६ परस्यानुदात्तेन किमिति ग०।

७ यथाविहितं यत्नमिति ग०, इ० मु० च।

८ न मिथुनौ इति इ०मु०।

विष्टये दुरोणे। अद्दावनद्त। मर्त्यां॑ आविवेश। एवम्पूर्व्वाविति किं। अभ्यस्थात्। ह्वत्स्वसः। 'तु'शब्द इतरौ यवकारौ(१) निवर्त्तयन्नादेशप्राप्तयोरेवानयोर्लोपविषयत्वं द्योतयति। अवर्णः पूर्व्वो याभ्यां ताववर्णपूर्व्वौ॥

## नोख्यस्य॥ २०॥

उख्यस्य शाखिनः पक्षे अवर्णपूर्व्वौ यवकारौ न लुप्येते। उक्तान्येवोदाहरणानि॥

## वकारस्तु साङ्कृत्यस्य॥ २१॥

सान्निध्यान्निषेधो लभ्यते। साङ्कृत्यस्य मते अवर्णपूर्व्वो वकारो न लुप्यते, यकारस्तु लुप्यत एवेत्यर्थः।(२) अद्दावनद्त(३)। पूर्व्वाचार्य्यमतनिवर्त्तकः, 'तु'शब्दः। सूत्रमिदमेवेष्टम्। न तु पूर्व्वद्वयं परद्वयञ्च॥

## उकारौकारपरौ लुप्येते माचाकीयस्य॥ २२॥

यकारवकाराववर्णपूर्व्वौ उकारौकारकपरौ लुप्येते, यथासङ्ख्यं माचाकीयस्याचार्य्यस्य मतेन(४)। आप उन्दन्तु। या जाता ओषधयः(५)। एवम्पराविति किं। त एनां भिषज्यन्ति। वायविष्टये। लुप्येते इति इह पुनरारम्भः। पूर्व्वसूत्रप्रयोजनसम्बन्धशङ्कानिराकरणार्थः(६)॥

---

१ यवौ इति ग०।

२ वायव इष्टये दुरोणो इति इ०मु० पुस्तकेऽधिकः पाठः।

३ अद्दावनद्ताद्धते इति ग०, इ० मु० च।

४ मते इति इ० मु०।

५ ग, चिह्नितपुस्तके जाता इति पाठो नास्ति।

६ पूर्वसूत्रद्वयस्थितजननसम्बन्धशङ्कानिराकरणार्थ इति ग०। पूर्वसूत्रद्वयस्थितनजः सम्बन्धशङ्कानिराकरणार्थ इति इ० मु०।

## लेशो वात्सप्रस्यैतयोः ॥ २३ ॥

वात्सप्रस्यमते(१) यकारवकारयोः(२) अवर्णपूर्व्वयोर्लेशः स्यात्। लेशो नाम लुप्तवदुच्चारणं(३)। एतयोरित्युकारौकारपरौ निर्द्दिशति। उक्तान्येवोदाहरणानि ॥

## न प्लुतप्रग्रह्यौ ॥ २४ ॥

न खलु प्लुतः प्रग्रहश्च सन्धिविधिं भजते(४)। यथा, अस्तुह्वी३ इत्यव्रूताम्। ते एनमभि। इत्यादिविधौ निषिद्धे अन्यस्मिंश्चानारभ्यमाणे प्रकृतिवद्भवति ॥

## परस्य परस्य ॥ २५ ॥

चकाराकृष्टयोर्य्यकारवकारयोर्लोपे(५) सति परसन्धिर्न(६) भवति। यथा, आप उन्दन्तु। अग्न इमं। सान्निध्यान्निषेधो लभ्यते। ननु लोपे सतीत्येतावतैवालं यकारवकारयोरिति किं(७)। सेदुहोता। सैनानीकेन। सोषधीरनु(८)। इत्यादि।

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे दशमोऽध्यायः ॥

---

१ एतयोरिति इ० मु० पुस्तकेधिकः पाठः।

२ यवकारयोरिति ग०।

३ लुप्तमुच्चारणमिति ग०।

४ सन्धिविधिं भजेते इति इ० मु०। सन्धिविधिं भजते इति क०।

५ यवकारयोर्लोपे इति ग०, इ०मु०च।

६ परः सन्धिर्नेति इ० मु०।

७ यवकारयोरिति किमिति ग०, इ० मु० च।

८ सौषधीरिति ग०।

## अथैकादशोऽध्यायः।

### लुप्यते त्वकार एकारौकारपूर्व्वः ॥ १ ॥

एकारपूर्व्व ओकारपूर्व्वो वा अकारो लुप्यते। यथा, तेऽब्रुवन्। (१),'तु' शब्दो न प्लुतप्रग्रहाविति निषेधसम्बन्धं(२) निवर्त्तयतीति केचित्। स्वरपराधिकारं निवारयतीत्यपरे सङ्गिरन्ते। एकारौकारौ पूर्व्वौ यस्मात् सः, तथोक्तः॥

### अथालोपः ॥ २ ॥

'अथ' इत्ययमधिकारः। अलोप उच्यते, इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः। न लोपः, अलोपः, लोपाभाव इत्यर्थः॥

### धातारातिरूपवाजपेयजुष्टश्येनायोख्यध्रुवचितिरियमेवसायाग्निर्मूर्द्धारुद्रप्रथमोपोत्तमविकर्षविद्वव्यद्धिरण्यवर्णीययाज्यामद्यापृष्ठेच ॥ ३ ॥

धातारातिरित्यादिष्वनुवाकेषु एकारपूर्व्व ओकारपूर्व्वो वा अकारो न लुप्यते। धातारातिरित्यत्र यथा, निधिपतिर्नो अग्निः।

---

१ सोऽब्रवीदिति द० मु० पुस्तकेऽधिकः पाठः।

२ निषेधसम्बन्धविधिमिति ग०, द० म०च।

रातिरिति किं। धाता देवेभ्योऽसुरान्, इति शाखान्तरे। उपप्रयन्तो अध्वरमित्यत्र यथा, आरे अस्मे च, देव सवितः प्रसुव, इत्यादिषड़नुवाकानां वाजपेयसञ्ज्ञा। अत्र यथा, ते नो अर्व्वन्तः। ते अग्रे अश्वं[1]। जुष्टोवाच इत्यत्र यथा, यस्ते अꣳशुः। यो द्रप्सोः अꣳशुः। श्येनायेत्यत्र यथा[2], नमः पितृभ्यो अभि। विश्वे अरपा एधते। उख्ये यथा, शृण्वन्ति विश्वे अमृतस्य। नमो अस्तु सर्पेभ्यः। ध्रुवक्षितिरित्यत्र यथा, विश्व अभिगृणन्तु। ऊर्मिर्द्रप्सो अपां। क्षितिरिति किं। ध्रुवेत्यकारान्तस्य यदि ग्रहणं स्यात्। ध्रुवोसि ध्रुवोहमित्यत्रापि भवेदिति। इयमेव सायेत्यत्र, केतुं कृण्वाने अजरे। त्रयो घर्म्मासो अनु। इयमित्येतावतैवालं किमन्येन[3]। इयं ते शुक्र तनूरित्यत्र, सगर्भ्यो[4] अनुसखेत्यत्र, माभूदिति, सायेति पदद्वयं मन्दधियां प्रतिपत्त्यर्थमिति केचित्। अन्येत्वन्यथापि[5] कथयन्ति। अस्यानुवाकस्य शेषभूता या[6] ऋगन्यत्र स्थिता सापि स्वीकर्त्तव्येति[7]। यथा, ये अपरीषु पश्यात्[8]। अग्निर्मूर्द्धा दिव इत्यत्र यथा, स योजते अरुषः। एनावो अग्निं[9]। मूर्द्धेति किं। अग्निर्मादुरिष्टादित्यत्र, यो मेतिदूरे रातीत्यत्र माभूदिति[10]। रुद्रप्रश्नस्य प्रथमोपोत्तमानुवाकयोर्यथा, नमो

---

१ अश्वमा युञ्जन्निति ग०।

२ श्येनाय पत्वने इत्यत्र यथेति ग०, इ० मु० च।

३ किमन्यैरिति ग०।

४ सगर्भ इति ग०।

५ अन्ये त्वन्यथेति ग०, इ० मु० च।

६ शेषोभूता या इति ग०।

७ ऋगन्यत्र स्थितामपि स्वीकरोतीति ग०।

८ यो ते यन्ति ये अपरीषु पश्यादिति ग०, इ० मु० च।

९ अग्नि नमसेति ग०।

१० योमेतिदूरेरातीयतीति ग, चिह्नितपुस्तके पाठोस्ति। माभूदितीति पाठस्तु नास्ति।

अस्तु नोलग्नीवाय (१) उत मा नो अर्भकम्। उत्तमस्य पूर्व्वतः सन्निकृष्टः, उपोत्तमः। अश्मन्नूर्ज्जमित्यनुवाकपञ्चकस्य(२) विकर्षसञ्ज्ञा। तत्र, अन्यन्ते अस्मत्। पावको अस्मभ्यम्। यो नः सतो अभि रायस्पोषे अधियज्ञो अस्थात्। वाजो नः सप्ते-त्याद्यनुवाकत्रयस्य(३) विहव्य सञ्ज्ञा। तत्र, विश्वे अद्य मरुतः। देवासो अधिवोचत(४)। हिरण्यवर्णीये यथा, एको देवो अप्यतिष्ठत्। याज्यासु यथा, सुपथा राये अस्मान्। कामेन कृतो अभि(५)। समिद्दिशां, जीमूतस्य, यदक्रन्दो, मानो मित्रो, ये वाजिनम्, अग्निर्मन्वे, षण्णामेषामनुवाकानां महापृष्ठ्यसञ्ज्ञा। तत्र, विवस्वद्वाते अभि नः। सोमो अधिब्रवीतु। महेति किं। पृथिवी तेन्तरिक्षेण॥

## अꣳहसोꣳहतिरनिष्टतोऽवन्त्वस्मानवद्यादहनि च॥४॥

'च'कारो धातारातिरित्यादिविषयान्वादेशकः(६)। अꣳहसः, अꣳहतिः, अनिष्टृतः, अवन्त्वस्मान्, अवद्यात्, अहनि, इत्येतेषु ग्रहणेषु धातारातिरित्यादिस्थलेष्वन्तर्वर्त्तिष्वेकारपूर्वं ओकारपूर्वो वा(७) न लुप्यते। यथा, प्रमुञ्चतो नो अꣳहसः। परिद्वेषसो

---

१ द्रापे अन्धसस्पते इति ग० चिह्नित-पुस्तके इ० मु० पुस्तके चाधिकपाठः।

२ अश्मन्नूर्जमित्यत्रानुवाकपञ्चकस्येति ग०, इ० मु० च।

३ वाजो नः सप्त प्रदिश इत्यत्राद्यनुवाकत्रयस्येति ग०, इ० मु० च।

४ विश्वे देवासो अधिवोचता मे इति इ० मु०।

५ कामेन कृतो अभ्यानदिति इ० मु०।

६ विषयान्वादिशतीति ग०।

७ एकारपूर्वो वौकारपूर्वो वा अकार इति ग०, इ० मु०।

अण्ंहतिः । वर्द्धतान्ते अनिष्टृतः । ते अवन्त्वस्मान् । अस्मानिति किं । तेनोऽवन्तु पितरः । मित्रमहो अवद्यात् । शुचिः शुक्रे अहनि(१) । यवनह्वपरत्वादेषु प्राप्यमाणलोपेषु अलोपोऽयं विहितः । अन्वादेशः किमर्थः । स एवैनं पाप्मनोऽण्ंहसो मुञ्चति ॥

## अनु घर्म्मासआपोमर्त्तोरथस्त्वोदत्तेवातःपूर्वः ॥ ५ ॥

अत्र विसर्गान्तानामोत्वमापन्नानां पूर्वनिमित्तत्वमिति विज्ञेयं । घर्म्मासः, आपः, मर्त्तः, रथः, त्वः, दत्ते, वातः, एवम्पूर्वः(२) अन्वित्यत्र अकारो न लुप्यते । यथा, त्रयो घर्म्मासो अनु । तस्मादापो अनु(३) । यदा ते मर्त्तो अनु । अनु त्वा रथो अनु । पोयति त्वो अनु । शुक्रमादत्ते अनुहाय(४) । धनुस्तद्वातो अनु(५) । अन्विति किं । वातोऽभिपवते(६) । एवम्पूर्व इति किं । अनुगावोऽनुभगः(७) । यवनह्वपरत्वनिषेधार्थोऽयमारम्भः ॥

## अभिवात्वपश्च ॥ ६ ॥

'च'कारो वात इत्यन्वादिशति । अभिवातु, अपः, इत्येतयोरकारो वातःपूर्वो न लुप्यते । मयोभूर्वातो अभिवातु(८) ।

---

१ अहन्योजसोनेति ग०, इ० मु० च ।
२ इत्येवम्पूर्व इति ग०, इ०मु० च ।
३ अनु स्य नेति ग०, इ०, मु० च ।
४ अनुहाय जार्ये इति ग०,इ० मु० च ।
५ अनुवातु ते इति ग०, इ० मु० च ।
६ अमुष्मिंल्लोके वातोऽभिपवते इति इ० मु० ।
७ अनुगावोनुभगः कनीनामिति इ०मु० ।
८ अभिवातूत्र इति इ० मु० ।

वात्विति किं। वातोऽभिषवते(१)। यद्वातो अपो अगमत्। अन्वादेशेन किं(२)। भवत्यन्धेऽपोऽग्नेऽभिव्याहरति॥

**अन्वगमच्च॥ ७॥**

अप इति 'च'कारोऽन्वादिशति। अनु, अगमत्, इत्येतयोरकारो न खल्वपःपूर्वो लुप्यते। अपो अन्वचारिषं। अपो अगमदिन्द्रस्य। एवम्पूर्व इति किं। पशवोनूदायन्॥

**आपःपूर्वोऽद्भिरपान्नपादस्मान्॥ ८॥**

अद्भिः, अपान्नपात्, अस्मान्, एतेषु अकार आपःपूर्वो न लुप्यते। समापो अद्भिरग्मत। देवी रापो अपान्नपात्। नपादिति किं। वारुणीरापोपाच्च। आपो अस्मान्मातरः(३)। एवम्पूर्व इति किं। सोऽस्मान् पातु॥

**रायेसइन्द्रःपूर्वश्चाकारपरे॥ ९॥**

'च'काराक्षष्टे अस्मान्ग्रहणे अकारपरे(४) वर्त्तमानोऽकारो राये, सः, इन्द्रः, एवम्पूर्वो(५) न लुप्यते। रायेपूर्वस्योदाहरणं शाखान्तरे, अथवा जटायाम्भवति। राये अस्माꣳ अस्मान् राये राये अस्मान्। यथासंहितायां नोदाहरणम्, अकारपरत्वाभावात्, तर्हि तदा(६) कथमलोप इति चेत्। त्रिपदप्रभृतिपुनरुक्तत्वादिति ब्रूमः। मा सो अस्माꣳ अवहाय(७)। इन्द्रो अस्मानस्मिन्(८)।

१ वातोभिपवते इति ग०।
२ वातपूर्व इति किमिति ग०।
३ अस्मान्मातरः शुन्धन्त्विति ग०।
४ अकारपरे सति इति इ० मु०।
५ इत्येवम्पूर्वे इति ग०, इ० मु० च।
६ तदेति पदं ग० चिह्निते इ०मु० पुस्तके च नास्ति।
७ सामो अस्मानवहायेति ग०।
८ इन्द्रो अस्मानस्मिन् द्वितीये इति ग०,इ० मु० च।

अकारपर इति किं। सोऽस्मान् पातु। एवम्पूर्वं इति किं। सोऽस्मानमुञ्च। अकारः परो यस्मात् तत् अकारपरम्, तस्मिन् ॥

## तेपूर्वोऽद्यान्धोऽꣳशुरग्ने ॥ १० ॥

अद्य, अन्धः, अꣳशुः, अग्ने, एतेष्वकारः, ते इत्येवम्पूर्वो न लुप्यते। यथा, पशुं पशुपते ते अद्य। उपो ते अन्धः। अꣳशुना ते अꣳशुः। यत्ते अग्ने तेजस्तेनाहं। एतेष्विति किं। तेऽग्नये-प्रवते(१)। तेपूर्व इति किं। प्रथमोऽꣳशु स्कन्दति। तेन त्वा दधेऽग्ने अङ्गिरः ॥

## मेपूर्वश्च ॥ ११ ॥

'च' काराकृष्टे सति अग्न इत्यस्मिन् अकारो मे इत्येवम्पूर्वो न लुप्यते(२)। यथा, यन्मे अग्ने अस्य। इमा मे अग्न इष्टकाः। मेपूर्व इति किम्। तेन त्वा दधेऽग्ने अङ्गिरः। अन्वादेशेन किं। प्राणश्च मेऽपानश्च मे। तदग्रकं तन्मे राधि ॥

## अस्याश्विनापरा च ॥ १२ ॥

मेपूर्व इति 'च'कारोऽन्वादिशति। अस्य, अश्विना, अपरा, एतेष्वकारो मेपूर्वो न लुप्यते। वियन्तु देवा हविषो मे अस्य। पुनर्मे अश्विना युवं(३)। यद्वा मे अपरागतं ॥

---

१ ते तेग्नये प्रवते इति इ० मु०। मे पूर्वोऽग्ने इत्यत्राकारो न लुप्यते इति इ०मु०।
२ चकारोऽग्ने इत्यन्वादिशति। ३ युवं चच इति इ० मु०।

### नःपूर्वोऽसदग्निरघान्तमोऽभ्यस्मिन्नद्यपथि ॥ १३ ॥

असत्, अग्निः, अघ, अन्तमः, अभि, अस्मिन्, अद्यपथि, एतेष्वकारो न इत्येवम्पूर्वो न लुप्यते। यथा, सुपारा नो असद्वशे। अयं नो अग्निर्वरिवः। रक्षामाकिर्नो अघशꣳस ईशत। अग्ने त्वं नो अन्तमः। स्विष्टिर्नो अभि(१)। शिक्षा नो अस्मिन्। तेभिर्नो अद्यपथिभिः(२)। पथीति किं। नोद्य वसु वसतीति। नःपूर्व इति किं। तस्मादश्वाद्गर्दभोऽसत्तरः। सोऽग्निर्जातः। उत्तरतोघायुरभिदासति। तेस्मिन्नैच्छन्त। एतेष्विति किं(३)। ते नः पान्तु ते नोऽवन्तु ॥

### नमःपूर्वोऽग्रेऽश्वेभ्योऽग्रियाय ॥ १४ ॥

अग्रे, अश्वेभ्यः, अग्रियाय, एतेष्वकारो नमःपूर्वो न लुप्यते। नमो अग्रेबधाय च। नमो अश्वेभ्योऽश्वपतिभ्यः। नमो अग्रियाय च। नमःपूर्व इति किं। अपोऽग्रेऽभिव्याहरति। एतेष्विति किं। नमोग्नये प्रतिविद्धाय ॥

### आविन्नःसोमःपूर्वो ग्निपरः(४) ॥ १५ ॥

आविन्नः, सोमः, एवम्पूर्वोऽकारोऽग्निपरो न लुप्यते। ग्नीतिपदैकदेशः शाखान्तरे बह्वुपादानार्थः। आविन्नो अग्निर्गृहपतिः। सोमो अग्निरुप देवाः। एवम्पूर्व इति किं। सोग्निर्जातः। एवम्पर इति किं। आविन्नोयमसौ ॥

---

१ स्विष्टिं नो अभिवसीय इति इ० मु०। स्विष्टिं नो अभिवसीयो नयन्त्विति ग०।

२ अद्यपथिभिः सुगुभी रक्षा च न इति इ० मु०।

३ नमोग्नये प्रतिविद्धायेति पाठः इ० मु० पुस्तकेधिकोस्ति।

४ पूर्वोऽग्निपरः इति क०।

धीरासोऽदब्धासएकादशासऋषीणांपुत्रःशार्य्यातेऽषा-
ढःपितारःपृथिवीयज्ञआसतेयेगृह्णाम्यग्रेवाॐएषजज्ञेसॐस्का-
नोयुवयोर्यःपृष्ठेपतिर्वागोशुष्मःपुवःसमिद्धऋषभःपाथोवचो-
वर्षिष्ठेजुषाणोयोरुद्रोवृष्णःपूर्वः ॥ १६ ॥

धीरासः, अदब्धासः, एकादशासः, ऋषीणां पुत्रः, शार्य्याते, अषाढः, पितारः, पृथिवी यज्ञे, आसते ये, गृह्णाम्यग्रे, वाॐएषः जज्ञे, सॐस्कानः, युवयोर्यः, पृष्ठे, पतिर्वः, गो, शुष्मः पुवः, समिद्धः, ऋषभः, पाथः, वचः, वर्षिष्ठे, जुषाणः, यो रुद्रः, वृष्णः, एवम्पूर्वा न खल्वकारो लुप्यते। यथा, धीरासो(¹) अनुष्टश्य यजन्ते। अदब्धासो अदाभ्यं। एकादशासो, अप्सुषदः। ऋषीणां पुत्रो अधिराज एषः। ऋषीणामिति किं। यस्य पुत्रो जातः। यथा शार्य्याते अपिवः। अषाढो अग्निः। त्वत्पितारो अग्ने देवाः। पृथिवी यज्ञे अस्मिन्। पृथिवीति किं। ते मास्मिन् यज्ञे, इत्यत्र(²) जटायां। अध्यासते ये अन्तरिक्षे। आसत इति किं। पृथिव्यां(³) येन्तरिक्षे। मयि गृह्णाम्यग्रे अग्निं। गृह्णामीति किं। अष्टौ-कृत्वोग्रेभिषुणोति। इडावाॐएषो असुर। वानिति किं। शुक्र एषोऽन्तोऽन्तं मनुष्यः। प्रथमं(⁴) यज्ञे अग्निः। सॐस्कानो अभि-रक्षतु। समिति किं। गयस्फानोऽग्निषु, इति शाखान्तरे।

---

१ तां धीरास इति ग०, इ० मु० च।
२ यज्ञे इतीति ग०।
३ ये पृथिव्यामिति इ० मु०।
४ इतः प्रथममिति ग०, इ० मु० च।

युवयोर्यो अस्ति। युवयोरिति किं। योप्सु भस्म(१)। नाकस्य पृष्ठे अधि(२)। यज्ञपतिर्वो अत्र। पतिरिति किं। नवो भागानि हव्यं। गो अर्घमेव सोमं करोति। अप्यकारादिति वचनात् अगो अर्घम् इति चोदाहरणं। उच्छुषो अग्ने यजमानाय(३)। अग्रे पुवो अग्रे गुवः। समिद्धो अञ्जन्। द्यामृषभो अन्तरीक्षं। प्रियं पाथो अपीहि। उग्रं वचो अपावधीत्(४)। वर्षिष्ठे अधि-नाके। जुषाणो अप्तुराज्यस्य वेतु। यो रुद्रो अग्नौ यः। य इति किं। यदुपदन्याद्रुद्रोस्य(५)। वृष्णो अश्वस्य सन्दानं(६)॥

अरतिमस्ययज्ञस्यातिद्रुतोऽतियन्त्यनृणोऽविष्यन्ननमीवोऽन्नेष्वर्चिरजीतानज्यानिमक्षियाअम्बाल्यर्वन्तमस्त्वक्रणोदङ्गिरोऽप्सुयोअस्कभायदच्युतोऽश्वसनिरस्थभिरग्निश्रेदङ्गेऽभिय ॥१७॥

अरतिं, अस्य यज्ञस्य, अतिद्रुतः, अतियन्ति, अनृणः, अविष्यन्, अनमीवः, अन्नेषु, अर्चिः, अजीतान्, अज्यानिं, अक्षियाः, अम्बालि, अर्वन्तं, अस्तु, अक्रणोत्, अङ्गिरः, अप्सु यः, अस्कभायत्, अच्युतः, अश्वसनिः, अस्थभिः, अग्निश्रेत्, अङ्गे, अभिय, एतेष्वकारो न खल्वेकारपूर्व ओकारपूर्वो वा लुप्यते। यथा, मूर्द्धान-

---

१ योप्सु भस्म प्रवेशयति इति इ० मु०। २ अधिरोचने दिव इति ग०, इ० मु० च। ३ यजमानायेधीति इ० मु०। ४ अपावधीमिति ग०, इ०, मु० च। ५ यदुपदन्याद्रुद्रोस्येति इ० मु०। ६ सन्दानमसीति ग०, इ० मु०।

न्दिवो अरतिं(१)। यज्ञे अग्ने अस्य यज्ञस्य। यज्ञस्येति किं। एतेऽस्याममुष्मिन्। प्रत्यङ्क्सोमो अतिद्रुतः। पश्यन्तो अतियन्ति। द्रुतीयन्तीभ्यां किं(२)। नैनᳬ सोमोतिपवते। तदग्ने अनृणो भवामि। नयवसे अविष्यन्। स्वावेशो अनमीवः(३)। ये अन्नेषु विविध्यन्ति। जातवेदो यो अर्चिः। शरदो अजीतान्। तेषां यो अज्यानिं। तिरो अह्निया मा सुहुताः। अम्बे अम्बालि। यो अवन्तं जिघाᳬसति। वह्निस्ते अस्तु बालिति। इत इन्द्रो अकृणोत्। अग्ने अङ्गिरो योस्यां। यो अप्सु य ओषधीषु। य इति किं। अश्वोप्सुयोवेतसः(४)। यो अक्षभायदुत्तरं। मदाय रसो अच्युतः। यो भद्रो अश्वसनिः। सनिरिति किं। अश्वे-भ्योऽश्वपतिभ्यः(५)। इन्द्रो दधीचो अस्थभिः। भिरिति किं (६)। दद्दीशमस्थभ्यो मज्जभ्य(७) इत्यत्र जटायां(८) अस्थभ्यो मज्जभ्यो मज्जभ्योऽस्थभ्योऽस्थभ्यो मज्जभ्यः। वरुणो अग्निग्नेत्। अङ्गे अङ्गे निदेध्यत्(९)। अघ्निर्येत्यकारगृहीतः पदैकदेशो बहुपादा-नार्थः। एतानि ते अघ्निये नामानि। यदापो अघ्निया वरुणेति(१०)। पयो अघ्नियासुहृत्सु।

---

१ अरतिं पृथिव्या इति द० मु०।

२ इतो यन्तीत्याभ्याकिमिति द० मु०। इतोनियन्ती इत्येताभ्यां किमिति ग०।

३ अनमीवो भवानि इति द० मु०।

४ अप्सुजो वेतस इति ग०,द० मु० च।

५ अश्वपतिभ्यश्चेति द० मु०।

६ अस्थभिरिति किमिति द० मु०, ग० च। अस्थभिरितिकिमिति ग०।

७ ग, चिह्नित द० मु० पुस्तके च दद्दीति पदं नास्ति।

८ इति जटायामिति ग०।

९ निदध्यदिति ग०।

१० वरुणेति अपामस्वे इति द० मु०।

## अध्वर स्वरपरे ॥ १८ ॥

अध्वर इत्यस्मिन् ग्रहणे स्वरपरे वर्त्तमानोऽकारो न खल्वेकारौ कारपूर्व्वो वा[१] लुप्यते। सत्यधर्म्माणो अध्वरे। हविष्मान् देवो अध्वरः। उपप्रयन्तो अध्वरमित्याह। अत्र त्रिपदप्रभृति-न्यायेन[२] प्रसरति। तल्लक्षणासम्भवात्[३]। स्वरपर इति किं। शुग्वा अग्निः सोध्वर्युं[४] ॥

## स पूर्व्वस्यार्द्धसदृशमेकेषामर्द्धसदृशमेकेषाम् ॥ १९ ॥

योऽयमकारोऽलुप्तः स पूर्व्वस्य एकारस्य ओकारस्य वा अर्द्ध-मात्रसदृशं कालं भजते इत्येकेषामृषीणां मतं। अध्यर्द्धमात्रः स्यादित्यर्थः। उक्तान्येवोदाहरणानि दर्शनात्[५]। अर्द्धेन सदृशः अर्द्धसदृशः, तम्, अर्द्धसदृशम् ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकादशोऽध्यायः ॥

---

१ वेति पदं इ० मु० पुस्तके नास्ति।

२ त्रिपदन्यायेनेति ग०।

३ तल्लक्षणाभावसम्भवादिति ग०।

४ सोध्वर्युरिति ग०।

५ विशेषदर्शनादिति ग०, इ० मु० च।

# अथ द्वादशोऽध्यायः।

## अथ लोपः ॥ १ ॥

'अथ' इत्ययमधिकारः। अकारस्य लोप उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः। धातारातिरित्यादिविषयोऽयमध्यायारम्भः॥

## असि ॥ २ ॥

'असि' इत्यस्मिन् अकारो लुप्यते, एकारौकारपूर्व्वः। यथा, सुपर्णोऽसि गरुत्मान्। प्रथोऽसि पृथिव्यसि॥

## न गर्भःसन्नद्धोयमोभद्रःपूर्व्वः॥ ३ ॥

गर्भः, सन्नद्धः, यमः, भद्रः, एवम्पूर्व्वः सान्निध्याल्लब्धे असीत्यस्मिन् अकारो(१) न लुप्यते। गर्भो अस्योषधीनां। सन्नद्धो असि वोढ़यस्व। समिति किं। उपनद्धोऽसुर इति केचिदुदाहरन्ति, तच्चिन्त्यं। धातारातिरित्याद्यन्तःपातित्वाभावात्, असिशब्दादर्शनाच्च। मुख्यन्तु शाखान्तरे विज्ञेयं प्रत्युदाहरणं। असि यमो अस्यादित्यः। त्वं भद्रो असि क्रतुः॥

---

१ असीत्यस्मिन्प्रकृत्योऽकार इति इ० मु०।

यवनह्वपरः स्वरपरेषु ॥ ४ ॥

यकारवकारनकारह्वकारपरोऽकारो लुप्यते, तेषु यकारादिषु स्वरपरेषु सत्सु। हिरण्यशृङ्गो यो अस्य पादाः। वनस्पतेऽव सृजाररराणः। वरेण्योऽनुप्रयाणं। जम्भयन्तोऽह्विं(१)। स्वरपरेष्विति किं। शुक्रन्ते अन्यत्। अग्रे अह्नाᳪहितः॥

जकारग्नपर उदात्तः ॥ ५ ॥

जकारपरश्च(२) ग्नपरश्च अकार उदात्तो लुप्यते। ओजोऽजायथाः। शुचिः पावक वन्द्योऽग्ने। उदात्त इति किं। न तद्दषाणो अजरः। निधिपतिर्नो अग्निः॥

मोवचोदधानस्थेपूर्व्वश्च ॥ ६ ॥

ग्नपर इति 'च'कारो ज्ञापयति। मः, वचः, दधानः, स्थे, इत्येवम्पूर्व्वो ग्नपरोऽकारलोपः(३) भवति। यथा, अङ्गिरस्वदच्छेमोग्निं मे, इत्यत्र पदैकदेशग्रहणं सङ्क्षेपार्थं। अङ्गिरस्वद्भरिष्यामोऽग्निं। वचोऽग्नये भरता बृहत्। दधानोऽग्निर्होता। सधस्थेऽग्निं पुरीष्यं। अन्वादेशः किमर्थः। सधस्थे अध्युत्तरस्मिन्। ग्नपरस्यानुदात्तार्थीयमारम्भः(४)॥

---

१ जम्भयन्तोऽह्विं इकमिति ग०, इ० मु० च।

२ जकारपर इति ग०, इ० मु० च।

३ ग्नपरोऽनुदात्तोऽप्यकारलोप इति इ० मु०।

४ ग्नपरस्याकारस्यानुदात्तार्थीयमारम्भ इति इ० मु०। ग्नपरस्यानुदात्तीयमारम्भ इति ग०।

अभ्यावर्त्तिन्नपूपमपिदधाम्यद्यान्वदितिःशर्म्माग्नेर्जिन्ह्वामग्नयःपप्रयोऽस्माकमस्मेधत्ताश्माश्वाश्रुतिरश्यामामार्यमस्मत्पाशानस्मिन्यज्ञेऽस्ताव्यथमानाभिद्रोहमधाय्यदोऽथोदुग्धाअरिष्टाअरथाअर्चन्त्यन्तरस्यामस्थान्नायाङ्गिस्वदकरं ॥ ७ ॥

अभ्यावर्त्तिन्, अपूपम्, अपिदधामि, अद्यानु, अदितिः शर्म्म, अग्नेर्जिह्वां, अग्नयःपप्रयः, अस्माकं, अस्मेधत्त, अश्मा, अश्वा श्रुतिः, अश्याम, अमा, अर्यमन्, अस्मत्पाशान्, अस्मिन् यज्ञे, अस्ता, अव्यथमाना, अभिद्रोहं, अधायि, अदः, अथो, अदुग्धाः, अरिष्टाः, अरथाः, अर्चन्ति, अन्तरस्यां, अत्रस्थ, अन्नाय, अङ्गिरस्वत्, अकरं, एतेष्वकारो लुप्यते, एकारौकारपूर्वः। यथा, अग्नेऽभ्यावर्त्तिन्। अभ्यावर्त्तिन्निति किं(१)। कामेन क्रतो अभ्यानडकं। भद्रशोचेऽपूपन्देव। अग्नेऽपिदधाम्यास्ये। दधामीति किं। वद्धो अपि कच्च आसनि(२)। अनु नोऽद्यानुमतिः। अन्विति किं। प्रतत्ते अद्य शिपिविष्टनाम। अधिब्रवीतु नोऽदितिः शर्म्म यच्छतु। शर्म्मेति किं। यथानो अदितिः करति। अध्वरस्रोऽग्नेर्जिह्वामभि गृणीतं। जिह्वामिति किं। व्रतादद्न्ते अग्नेः। ते नोऽग्नयः पप्रयः। पप्रय इति किं। पुरीष्यासो

---

१ आवर्त्तिन्निति किमिति ग०, द० मु० च। २ आसिनीति ग०।

अग्नयः(१)। नरोऽस्माकमिन्द्र। विश्वेऽस्मे धत्त। धत्तेति किं। द्रविणं वाजो अस्मे वाजस्य मा। परिवृङ्धि नोऽश्मा भवतु(२) 'अश्वाश्रुतिः' अश्वा इत्यस्य यत्र यत्र श्रुतिः, तत्र तत्र लोपः। वृषपाणयोऽश्वा रथेभिः। श्रुतिरिति किं। प्रचेतसोऽश्वान्। भरन्तोऽश्वायेव। दीर्घग्रहणेन किं। चषालं ये अश्वयूपाय तक्षति। चक्रन्नो अश्वो वनतां। वाजयन्तोऽश्याम द्युम्नं। पुनस्तेऽमैषां। ये तेऽर्यमन्। तेऽस्मत्पाशान्। पाशानिति किं। अन्यन्ते अस्मत्(३)। यः पिता तेऽस्मिन् यज्ञे। यज्ञ इति किं। ते अस्मिन् जवमादधुः। प्रसितिं द्रूणानोऽस्तासि। मा सुपर्णोऽव्यथमाना। जनेऽभिद्रोहं मनुष्याश्चरामसि। द्रोहमिति किं। बृहस्पते अभिशस्तेः(४)। सुमन्मेऽधायि मन्म(५)। येऽदो रोचने दिवः। मह्यमग्नेऽथो सीद। शूर नोऽनुमोदुग्धाः। पूर्वेऽरिष्टाः स्याम। पवयोऽरथाः(६)। गायत्रिणोऽर्चन्ति(७)। अभिशूशुचोऽन्तरस्यां। अस्यामिति किं। रुक्मो अन्तर्विभाति। येऽत्रस्य पुराणाः। स्थेति किं। त्वष्टा नो अत्र वरिवः(८)। रायस्पोषोऽन्नाय त्वा। पृथिव्याः सधस्थेऽङ्गिरस्वत्। अहन्तेभ्योऽकरं नमः॥

**गाहमानोजायमानोहेतयोमन्यमानोवनस्पतिभ्यःपतेस्वि-धस्तपसःस्वधावोभामितोऽग्नयश्चायोऽध्वर्योक्रतोपूर्वः॥८॥**

---

१ अग्नयः प्रावणेभिरिति ग०, इ० मु० च।

२ अश्मा भवतु नस्तनूरिति इ० मु०। अश्मा भवातु इति ग०।

३ अस्मत्तपन्त इति इ० मु०।

४ अभिशस्ते रमुष इति इ० मु०।

५ उपप्रागात् सुमन्मेधायि मन्म इति इ० मु०।

६ ये पवयोऽरथा इति इ० मु०।

७ गायत्रिणोर्चन्त्यर्कमिति इ० मु०।

८ वरिवः कृणोतु इति ग०।

गाहमानः, जायमानः, हेतयः, मन्यमानः, वनस्पतिभ्यः, पतेस्त्विधः, तपसः, स्वधावः, भामितः, अग्नयः, आयो, अध्वर्य्यो, क्रतो, इत्येवम्पूर्वोऽकारो लुप्यते। यथा, गाहमानोऽदायः। जायमानोऽक्तां केतुः। हेतयोऽन्यमस्मत्। मन्यमानोऽमर्त्यं। वनस्पतिभ्योऽधिसम्भृतां। वनस्पतीति किं। नमः पिपलभ्यो अभि। अन्नपतेऽन्नस्यनिहो अतिस्त्विधोत्यचित्तिं। तपसोऽधिजातः। देव स्वधावोऽमृतस्य धाम। स्वधेति किं। अन्यावो अन्यामवतु। भामितोमित्रस्य(१)। शानग्नयोऽन्वतप्यन्त। उकारस्य वकारविक्रियायां व्यञ्जनपरो नकार इति(२)यवनहनिषेधाभावादलोपे प्राप्ते तदपवादोयं। अग्ने दुव्मायोऽग्नौततनो। अध्वर्य्योविरपाः३(३)। शतक्रतोऽनु ते दायि। अत्र यवनहेत्यादिनैव लोपे सिद्धे पुनरस्य ग्रहणं नियमार्थं। आयोऽध्वर्य्यो क्रतो इत्येतत्पदत्रयपूर्वाकारस्यैव(४) लोपः। नत्वितरत्र(५)प्रग्रहपूर्वस्येति। यथा, इमे अश्विना संवत्सरः॥

## तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितं॥ ९॥

यमधिकृत्यायं प्रबन्ध उक्तः, तस्मिन्नकारानुदात्ते(६) लुप्ते सति पूर्व एकार ओकारो वा उदात्तः स्वरितमापद्यते। यथा, तेऽब्रुवन्। सोऽब्रवीत्॥

---

१ मित्रस्याभिदासत इति ग०, इ० मु० च।

२ नकारपर इति ग०।

३ अध्वर्यौविरपा३ इति ग०।

४ इत्येतत्पदत्रयपूर्वस्यैवाकारस्य इति ग०, इ० मु० च।

५ नत्वितरेति इ० मु०।

६ तस्मिन्नकारेनुदात्ते इति ग०, इ० मु० च।

## उदात्त चानुदात्त उदात्तं ॥१०॥

तस्मिन्नेवाकारे उदात्ते लुप्ते(१) पूर्वं एकार ओकारो वा अनुदात्त उदात्तमापद्यते। यथा, अवरुन्धतेऽसत्रं वै। अन्नपतेऽन्नस्य नः॥

## स्वरितश्च सर्वत्र स्वरितश्च सर्वत्र ॥११॥

उदात्त इति शब्दो ज्ञापयति चकारः(२)। तस्मिन्नकारे उदात्ते लुप्ते सर्वत्र(३) एकार ओकारो वा स्वरित उदात्तमापद्यते। भेषजं गवेऽश्वाय। ओजोऽजायथाः। सर्वत्रेति वचनान्नित्यस्वरितेष्वपि तथैव तद्विधानं स्यात्। उक्थ्योऽथातिरात्र(४)॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वादशोऽध्यायः॥ * ॥

इति प्रथमः प्रश्नः।

---

१ लुप्ते सतीति ग०, इ० मु० च।
२ चशब्दो ज्ञापयति इति ग०,इ०मु० च।
३ उदात्ते सति सर्वं इति इ० मु०। उदात्ते सति लुप्ते सति सर्वत्रेति ग०।
४ अथोक्थ्योथातिरात्र इति ग०,इ० मु० च।

# अथ त्रयोदशोऽध्यायः।

## अथ मकारलोपः ॥ १ ॥

'अथ' इत्ययमधिकारः। मकारस्य लोप[१] उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः। मकारस्य लोपः, मकारलोपः ॥

## रेफोष्मपरः ॥ २ ॥

रेफपरश्चोष्मपरश्च पदान्तो मकारो लुप्यते। यथा, प्रत्युष्टꣳ रक्षः। सꣳशितं मे ब्रह्म। तꣳ षडहानि। सꣳसमिद्युवसे[२]। त्वꣳह यद्यविक्ष्य। एवम्पर इति किं। इदं वामास्ये। पदान्त इति किं। तस्मात्ताम्रा आपः। रेफश्च ऊष्मा च रेफोष्माणौ, तौ परौ यस्मात् सः, तथोक्तः[३] ॥

## यवकारपरश्चैकेषामाचार्याणां ॥ ३ ॥

यकारपरो वकारपरो वा मकारो लुप्यते, इत्येकेषां मतं।

---

१ मकारलोप इति ग०, इ० मु० च।

२ संसमिद्युवसे इषन् इति इ० मु०।

३ रेफश्च ऊष्माणश्च रेफोष्माणः, ते परे यस्मात् सः, तथोक्त इति इ० मु०।

य एवास्य पञ्चमानुवाके(१) सवर्णापत्तिं प्रतिषेधन्ति(२), तेषामेवैष लोप इति विधिरन्वादिशति(३)। चकारः(४) सिंहावलोकनेन। यथा, त्वꣳयज्ञेष्वीड्यः। तꣳ एवा एतꣳयजमानः। एवम्पर इति किं। यं कामं कामयते(५)। यकारश्च वकारश्च यकारवकारौ(६) तौ, परौ यस्मात् सः, तथोक्तः। नैतत् सूत्रमिष्टं(७)॥

## न सꣳसामिति रापरः॥ ४॥

रा इति परः(८) सं, सां, इत्येतयोर्ग्रहणयोर्मकारलोपो न भवति(९)। यथा, प्र सम्राजं। साम्राज्याय सुक्रतुः। सꣳसामिति किं। शꣳराजन्नोषधीभ्यः। रापर इति किं। सꣳरराणः। पदान्तस्य व्यञ्जनपरः प्राकृतः, इति वक्ष्यमाणं द्वित्वनिषेधम् 'इति' शब्दो निवारयति। तस्मादत्र द्वित्वसिद्धिः॥

## अथ वर्णानां॥ ५॥

'अथ' इत्ययमधिकारः। वर्णानां संहिता वक्ष्यते, इत्येतदधिकृतं वेदितव्यं। अथवा 'अथ'शब्दः पदसंहितानिषेधकः॥

## ऋकारर्कारेरषपूर्वो नकारो णकारꣳ समानपदे॥ ६॥

समानपदे एकपदे ऋकार ॠकार रेफषकारपूर्वो नका-

---

१ पञ्चमाध्याये इति ग०, इ० मु० च।
२ प्रतिषेधयन्तीति इ० मु०।
३ तेषामेवैष लोपविधिरिति तानन्वादिशति इति ग०, इ० मु० च।
४ चकारः पर इति क०।
५ यं कामयते इति ग०, इ० मु० च।
६ यवकाराविति ग०, इ० मु० च।
७ एतत्सूत्रमनिष्टमिति ग०, इ० मु० च।
८ रा इत्येवम्पर इति इ०, मु०।
९ मकारो न लुप्यतेइति ग०, इ०, मु० च।

रो णकारमाप्नोति(१)। त्रिभिष्ट्वं देव सवितः वर्षिष्ठैर्नाकमारुहत्। त्वष्टा दिव्यं कृणोति जायते। त्वष्टैहादृणां। एष वा ऋचो वर्णः। कृष्णोसि। एवम्पूर्व इति किं। देवानां वा अन्तं(२)। समानपद इति किं। एभिर्नो अर्कैः। समानञ्च तत् पदञ्च, समानपदं, तस्मिन्॥

## व्यवेतोऽपि॥७॥

उक्तनिमित्तपूर्वो नकारः, अन्येन व्यवेतो व्यवहितोऽपि(३) णत्वमाप्नोति। यथा, अपरश्वत्रकर्णं दहति। आ रमणं कुरुते(४)। अधिषवणे(५)। क्षमाणः प्रतिष्ठाकामः॥

## हिरण्मयं॥ ८॥

हिरण्मयम् इत्यस्मिन् ग्रहणे नकारो णकारमाप्नोति(६)। यथा, हिरण्मयं दाम दक्षिणा। स्पर्शपर इति वक्ष्यमाणप्रतिषेधस्य(७) प्रतिप्रसवार्थमिदं सूत्रं॥

## पाणि-गण-पुण्य-कण्व-काण-गाण-वाण-वेणु-गुण-मणि-प्रवादेषु पूर्वः॥ ९॥

पाणीत्यादिशब्दानां प्रवादेषु पूर्वतः(८) प्रथमो णकारः

---

१ णकारमापद्यते इति इ० मु०।

२ अन्तं जगमुषामिति ग०, इ० मु० च।

३ व्यवेतोऽपि व्यवहितोपि इति ग०, इ० मु० च।

४ आत्मन्नेवारमणं कुरुते इति इ० मु०।

५ अधिषवणमिति इ० मु०। अधिषवणी इति ग०।

६ णत्वमाप्नोतीति ग०, इ० मु० च।

७ वक्ष्यमाणनिषेधस्य इति ग०।

८ पूर्व इति ग०, इ० मु० च।

प्रकृत्यैव वेदितव्यः। प्रकर्षेण वादः प्रवादः। लिङ्गविभक्तिभेद-समासतद्धितादिभिर्निर्दिश्यत इत्यर्थः(१)। यथा, सुपाणिः स्वङ्गुरिः। वृषपाणयोऽश्वाः। हिरण्यपाणिमूतये। गणानान्त्वा गणपतिं(२)। गणा मे मा विल्लषन्। गणेन गणं। दूरे अमित्रस्य गणः। पुण्यो भवति वसन्तम् ऋतूनां। सा मा सर्वान् पुण्यान्। कण्वा अभिप्रगायत। तस्यै काणो या(३)। (४)गाणपत्यान्मयोभूरेहि। विश्ल्यो बाणवाꣳ उत। वेणुर्वैणवो भवति। वेणुना विमिमीते(५)। यद्वेणोः सुषिरं। यथा गुणे गुणं। मणिना रूपाणि नः। ननु गणशब्दप्रवादत्वाद्गाणग्रहणमयुक्तं। मैवं। गणप्रवादे सति(६) तद्भवेत्। किन्तु गणपतिशब्दप्रवादोयं। पूर्व इति किं। गणानां त्वा, वेणुना वि, मणिना रूपाणि, इत्यादिषूत्तरणकारस्य णत्वं(७) मा भूदिति ॥

## पणि-पणिं-वीयमाण-ऊण्योः ॥ १० ॥

पणीत्यादिषु ग्रहणेषु(८) णकारः प्रकृत्यैव विज्ञेयः(९)। अप्रवादार्थोऽयमारम्भः। अग्ने देवपणिभिः(१०)। पणिं गोषु स्तरामहे। वीयमाणः। तन्त एतं। ऊण्योः कविक्रतुं ॥

---

१ निर्दिश इत्यर्थ इति ग०, इ० मु० च।

२ गणपतिं हवामहे इति ग०, इ०मु०च।

३ यादत इति इ० मु०।

४ चकर्णया कर्णया इति ग, चिह्नित-पुस्तके इ० मु० पुस्तके चाधिकः पाठः।

५ वेणुमाभिमीते इति ग०।

६ गणप्रवादत्वे सतीति ग०, इ०म०च।

७ इत्यादिषूत्तरस्य णत्वमिति ग०, इ०, मु० च।

८ पणीत्यादिग्रहणेष्विति ग०,इ०मु०च।

९ प्रकृत्यैव वेदितव्य इति ग०,इ० मु०च।

१० पणिभिर्वीयमान इति इ० मु०।

### टवर्गपरः ॥ ११ ॥

टवर्गपरो(१) णकारः प्रकृत्यैव वेदितव्यः। श्रितिकण्ठाय च(२)। कण्डूयेत पामनं भावुकाः। टवर्गः परो यस्मात् सः, तथोक्तः ॥

### चङ्कुण-फणत्-स्थूणी-ह्विणुयाद्ह्विणोति-कौणेयोऽणिष्ठा-उल्वणमुगणाश्रुतिश्चुपुणीका-वाणिजायाणवश्चाट्णार-स्थाणुन्तूणवेवीणायामश्लोणया-पणेत-वाणीः-कल्याणी-कुणपं-वाणः शत-श्रोणाश्रुतिर्धाणिका-मेणी ॥ १२ ॥

चङ्कुण, फणत्, स्थूणा, ह्विणुयात्, ह्विणोति, कौणेयः, अणिष्ठाः, उल्वणं, उगणाश्रुतिः, चुपुणीका, वाणिजाय, अणवश्च, आट्णार, स्थाणुं, तूणवेवीणायां, अश्लोणया, पणेत, वाणीः, कल्याणी, कुणपं, वाणः शत, श्रोणाश्रुतिः, धाणिका, मेणी, एषु णकारः प्रकृत्यैव वेदितव्यः। अवभृथनिचङ्कुण(३)। अन्वापनीफणत्। अयस्थूणावुदितौ। भ्रातृव्याय प्रह्विणुयात्। एवास्मै प्रह्विणोति। रजनो वै कौणेयः। येऽणिष्ठास्तान्। यत्र उल्वणं क्रियते। यत्र यत्र श्रुतिः उगणाग्रहणस्य तत्र तत्र णत्वं करणीयं। यथा, अव्याधिनीरुगणा उत। उगणाभ्यस्तृंहतीभ्यः। चुपुणीका नामासि(४)। वाणिजाय कचाणां पतये(५)। प्रियङ्गवश्च मेऽणवश्च

---

१ टवर्गे परे इति द० मु०।

२ श्रितिकण्ठाय स्वाहा इति द०मु०।

३ निचङ्कुण निचेरुरिति द० मु०।

४ वर्षयन्ती चुपुणीकानामासीति द०मु०।

५ मन्त्रिणे वाणिजाय कक्षाणां पतये इति द० मु०।

मे। चेति किं। अनवस्ते रथं(१)। एतं वै पर आट्णारः। य स्थाणुᳪं हन्ति। या तूणवे या वीणायां। अश्रोणया सप्तशफया(२)। पणेतागो अघं। इन्द्रं वाणीरनूषता। कल्याणी रूपसमृद्धा(३)। पुरुषकुणपमश्वकुणपं(४)। वाणः शततन्तुर्भवति। शतेति किं। ऋतावानश्चयमानाः(५)। शोणा धृष्णू(६)। श्रुतिरिति किं। शोनाय स्वाहा। निंजल्गुलीति धाणिका। वनस्पतीनामेणी। मकारेण किं। उभयत एनी स्यात् (७)॥

## अवग्रहो वृषण्-शीर्षण्-ब्रह्मण्वत्-चर्मण्-चर्षण्॥ १३॥

वृषन्नित्यादिग्रहणेष्ववग्रहे णकारः प्रकृत्यैव विज्ञेयः(८)। वाता अपां वृषण्वान्। शीर्षण्वान्मेध्यो भवति। ब्रह्मण्वन्तो देवाः(९)। अक्षण्वते स्वाहा। चर्मण्वते स्वाहा। चर्षण्ग्रहणस्य शाखान्तरविज्ञेयमुदाहरणं(१०)। मित्रस्य चर्षणी धृत इति केचिदुदाहरन्ति। तन्न साधुः। अन्तो लोपात्, इति वक्ष्यमाणप्रतिषेधप्रतिप्रसवार्थमुक्तत्वादेषां ग्रहणानां चर्षणीधृत इत्यत्र णकारस्य पदान्तत्वाभावात्। अथवा ऋकारादिप्राप्तेरत्र(११) णकारो वैकृत

---

१ अनवस्थे रथमिति ग०।
२ सप्तशफया क्रीणाति इति इ० मु०।
३ रूपसमृद्धा सा स्यात् इति इ० मु०।
४ कुणपं गौरिति इ० मु०।
५ चयमाना ऋणानि इति इ० मु०।
६ धृष्णू नृवासा इति इ० मु०।
७ एनी स्यात्तदाऊरिति ग०, इ० मु० च।
८ प्रकृत्यैव वेदितव्य इति ग०, इ० मु० च।
९ देवा आसन्निति इ० मु०।
१० शाखान्तरे विज्ञेयमुदाहरणमिति ग०, इ० मु० च।
११ ऋकाररेफषादिप्राप्तेरत्रेति इ० मु०, ऋकाररेफषादिप्राप्ते तत्रेति ग०।

इति शङ्कानिराकरणार्थमेतानि ग्रहणानीत्यन्ये मन्यन्ते। तथा सति मित्रस्य चर्षणी धृत इत्युदाहरणं रमणीयं। अवग्रह इति किं। वृषत्वम्ने विश्वान्यर्य्य आ। तस्मात् सप्तशीर्षन्। ब्रह्मन्विश्वस्वि। अत्रन्नमीमदन्त। पशूनाञ्चर्म्मन्। अवग्रहस्थोऽवग्रह इति लक्ष्यते(१)॥

## ऋष्ण,षष्ण,ष्णाण्म,राव्ण चेति प्राकृताः॥ १४॥

अत्र सूत्रे एते पदैकदेशा बहूपादानार्थमुक्ताः। ऋष्णादिष्वेषु च णकारः प्रकृत एव विज्ञेयः(२)। स्वयमातृष्णामुप। अरुं वृष्णे हि हनू। स्वयमातृष्णा ज्योतिः। अभिषण्णो यस्मात्। निषण्णाय स्वाहा। दशमासा निषण्णा आसन्। पूष्णो रट्ह्येः(३)। पूष्णा सयुजा(४)। पूष्णे प्रपथ्याय(५)। अर्य्यम्णे चरुं(६)। दधिक्राव्णः(७)। आग्राव्णः। प्राकृतशब्दोयं पाण्णादिष्वेव चर्म्मण्पर्य्यन्तेषु(८) मुख्यः। चतसृषु सᳫँहितासु णत्वसद्भावात्। ऋष्णेत्यादिषु तु न मुख्यः। किन्तु प्राप्त्यभावेपि णत्वप्रापणार्थः। तथाहि, ऋष्णादौ पूर्वणकारस्य स्वर्परत्वान्निषेधः, उत्तरस्य सवर्गीयव्यवहितत्वात्(९)। ष्णाम्णग्रहणयोस्त्वलोपा-

---

१ वक्ष्यते इति क०।

२ णकाराः प्राकृता एव ज्ञेया इति ग०।

३ पूष्णो रंह्यै इति ग०, इ०मु० च।

४ सयुजा सह इति इ० मु०।

५ पूष्णे प्रपथ्याय स्वाहा इति ग०, इ० मु० च।

६ चरुं निर्वपेदिति ग०।

७ दधिक्राव्णो अकारिषमिति ग०।

८ चर्षण्पर्यन्तेषु इति ग०,इ०मु० च।

९ इतरस्य उत्तमस्य टवर्गव्यहितत्वादिति इ० मु०।

दिति निषेधः। ग्रहणसामर्थ्यादेव णत्वं सिध्यतीति चेत्। एवं स्वभावत्वमेव ग्रहणस्यापि मूलमिति परिहारः। किञ्च अन्वाचये वर्त्तमानश्चकारोऽप्येतेषु णत्वममुख्यमिति द्योतयति। मुख्यञ्चेत्तत्स्वेषु संहितासु विद्येत, न चात्र विद्यते। तथाहि। अभिषण्ण इत्यभिसन्नः, निषण्णायेति निषन्नाय, इत्यत्र पदसंहितायां पूषन्नर्थ्यमन्निति नकारान्तशब्दयोः पूष्णोरुष्णुष्णौ, अर्य्यम्णे चरुम्, इत्यादिसिद्धरूपत्वादत्र वर्णसंहितायामेतत्साहचर्य्यादेकसूत्रस्थयोरप्यृणषण्णयोर्वर्णसंहितायां णत्वे णत्वाभावोमन्तव्यः(१)। प्रसिद्धपदसमभिव्याहारेण अप्रसिद्धपदार्थसमर्थनं सर्वशास्त्रविदः सर्वे खलु स्वीकुर्वते। तस्मादस्मदुक्त एव युक्तप्रकृतशब्दार्थः।

**न घुम्नोऽग्निर्युष्मानीतोऽन्तोऽलोपात्स्पर्शपरो व्यवायेषु शसचटतवर्गीयेषु ॥ १५ ॥**

घुम्नः, अग्निः, युष्मानीतः, एतेषु नकारो णत्वं नापद्यते। सुषुम्नः सूर्यरश्मिः। इन्द्राग्निभ्यां त्वा(२)। युष्मानीतो अभयं(३)। अन्तः पदान्तो नकारो णत्वं नापद्यते। पितॄन् हविषे अत्तवे। प्रमृणीहि शत्रून्। अलोपात्परोपि(४) नकारो णत्वं नापद्यते।

---

१ वर्णसंहितायां णत्वभाव इति ग०, इ० मु० च।

२ इन्द्राग्निभ्यां त्वा सयुजेति ग०, इ० मु० च।

३ अभयं ज्योतिरिति इ० मु०।

४ अलोपादकारलोपात्परोपीति इ० मु०।

वृत्रघ्न इन्द्राय त्वा। वृत्रघ्न स्तोमः(१)। नन्वत्र निमित्तनिमित्तिनोर्भिन्नपदस्थत्वाद्विषमो दृष्टान्तः। सत्यम्। सिंहावलोकनेन च प्रथमे प्रश्ने(२) सप्तमाध्याये शेषोदाहरणरूपेण घटते। तत्र च समानपदत्वे नियमो(३) नास्ति। घ्न इत्यस्य हन्शब्दविकृतत्वात् रषंपूर्वौ हवनि, इति प्राप्तिः। स्पर्शपरो नकारस्य णत्वं नाप्नोति। सङ्क्रन्दनोऽनिमिषः। अवरुन्धे तार्प्यं। मखनिर्भिन्नं। स्पर्शोत्र प्रसिद्धलक्षणविषयो विवक्ष्यते। अन्यथा पूर्णा पश्चादित्यादौ णत्वं न स्यात्। रेफात् परश्चेति हि सिद्धलक्षणं,(४) तन्मूलञ्च पूर्णेत्यत्र द्वित्वं। प्रसिद्धपदेन किं। मखनिर्भिन्नमित्यादावपि कथञ्चिन्मूलत्वं(५) सम्भवति। किं तल्लक्षणमिति चेत्। द्वितीयचतुर्थयोरित्यत्र सूत्रे व्यञ्जनोत्तरयोरिति(६) वाचो युक्त्यन्तरमिति ब्रूमः। तस्य लक्षणं तत्रैव स्फुटीकरिष्यते महाप्रबन्धेन(७)। स्पर्शः परो यस्मादसौ, स्पर्शपरः। शसचटतवर्गीयेषु व्यवायेषु व्यवधायिकेषु सत्सु नकारो णत्वं नापद्यते। यथा, रशनामादत्ते। अग्ने रसेन(८)। रोचन्ते रोचना दिवि। सोमꣳ राजानं। प्रक्रीडिनः पयोधाः। पृतना जयेम(९)। जनप्रमथनाय(१०)। ऋकारर्कारादिप्राप्तेः प्रतिषेधोऽयं विहितः॥

---

१ स्तोमा इति ग०, इ० मु० च।

२ सिंहावलोकनन्यायेन प्रथमप्रश्ने इति ग०, इ० मु० च।

३ समानपदनियम इति ग०, इ० मु० च।

४ रेफात्परश्चेति हि प्रसिद्धं लक्षणमिति इ० मु०।रेफात्परश्चेति प्रसिद्धलक्षणमिति ग०।

५ कथञ्चित् लक्षणमूलत्वमिति ग०, इ० मु० च।

६ स्वचोक्तव्यञ्जनोत्तरयोरितीति इ०मु०।

७ महता प्रबन्धेनेति इ० मु०।

८ रसेन तेजसा इति इ० मु०।

९ जयामीति ग०, इ० मु० च।

१० जनप्रथनाय इति ग०। जनप्रथनाय स्वाहा इति इ० मु०।

**पृक्तस्वरात्परो लो ड़ं पौष्करसादेः पौष्करसादेः ॥ १६ ॥**

पृक्तस्वरात् ऋकारात् परो लकारो दुस्पृष्टसञ्ज्ञो(१) ड़कारमापद्यते, पौष्करसादेर्मते(२)। मृडातीदृशे। पृक्तस्वरादिति किं। नलं प्लव इति, शाखान्तरे। पौष्करसादिग्रहणं(३) पूजार्थं, न तु विकल्पार्थं। मूर्द्धास्थानतया दुस्पृष्टडलकारयोः(४) सादृश्यमस्तीति व्याकरणानुसारी सूत्रपाठोयं कथमनुसारितमिति चेत्। तथाहि, स्थानेन्तरतमः। स्थाने प्राप्यमाणानां वर्णानान्तरतम आदेशो भवतीति सूत्रपाठान्तरमपि(५) व्याख्यायते। पृक्तस्वरात्परो लो ड़मिति पौष्करसादेः। अत्र समानपद इत्यस्मादनुवर्त्तनं(६) विज्ञेयं। पौष्करसादेः शाखिनः समानपदे पृक्तस्वरादृकारात्परो लकारो ड़कारमापद्यते। यथा, ते नो मृडयन्तु। पृक्तस्वरादिति किं। इलान्दं भवति। समानपद इति किं। पितृलोकं सोमेन। सहचरितलादेकस्य(७) निषिद्धे इतरस्यापि पितृलोककामस्येति अस्य समानपदत्वे सत्यपि निषेधो भवति। इदमपि पाठान्तरं बह्वादृतं॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे त्रयोदशोऽध्यायः ॥ * ॥

---

१ दुःस्पृष्टसञ्ज्ञिक इति इ० मु०। दुःस्पृष्टसञ्ज्ञक इति ग०,।

२ मतेन इति ग०।

३ पौष्करसादेर्ग्रहणमिति इ० मु०।

४ दुःश्लिष्टडलकारयोरिति ग०। दुश्लिष्टलडकारयोरिति इ० म०।

५ सूत्रस्य पाठान्तरमपीति ग०, इ० मु० च।

६ इत्यस्यानुवर्त्तनमिति ग०, इ० मु० च।

७ सहचरितलादेकस्मिन्निति ग०।

## अथ चतुर्दशोऽध्यायः ।

### स्वरपूर्वं व्यञ्जनं द्विवर्णं व्यञ्जनपरं ॥ १ ॥

स्वरपूर्वं व्यञ्जनं व्यञ्जनपरं द्विवर्णमापद्यते(१)। यथा, उरुप्प्रथस्व। एवम्पूर्वं इति किं। तत् प्रवाते। पर इति(२) किं। उरुण्डुरुणस्कृधि। व्यञ्जनमिति किं। प्रउगमुक्थ्यं। स्वरः पूर्वो यस्मात् तत्, स्वरपूर्वं। व्यञ्जनमस्मात् परम्, इति व्यञ्जनपरं। द्वयोर्वर्णयोः समाहारो द्विवर्णं ॥

### लवकारपूर्वः स्पर्शश्च पौष्करसादेः ॥ २ ॥

तस्य मते(३) लकारपूर्वो वकारपूर्वो वा स्पर्शो द्विवर्णमापद्यते। कल्यान् ज्जुहोति। विभूदाव्ने। स्वरपूर्वं द्वित्वं चान्वादिशति, 'च'कारः। स्पर्श इति किं। कल्याणी रूपसमृद्धा वायव्यं। एवम्पूर्व इति किं। कूश्माण्डकाभिः। तस्मादेतद् गोसनि। लकारश्च वकारश्च लवकारौ, तौ पूर्वौ यस्मात् सः, तथोक्तः ॥

### स्पर्श एवैकेषामाचार्य्याणां ॥ ३ ॥

एकेषां मते लवकारपूर्वं स्पर्श एव द्विवर्णमाप्नोति(४)। अने-

---

१ द्विवर्णं स्यादिति ग०।
२ एवम्पर इतीति ग०, इ० मु० च।
३ पौष्करसादेर्मते इति ग०, इ० मु० च।
४ द्वित्वमाप्नोति न लणकाराविति ग०।

नावधारणेन सूत्रान्तरारम्भणेन(१) पौष्करसादिमते(२) लवकारयोश्च द्वित्वमस्तीति गम्यते। इदमेव सूत्रमिष्टं न पूर्वं(३)। पूर्वोक्तान्येवोदाहरणानि॥

## रेफात्परश्च ॥ ४ ॥

रेफात्परं व्यञ्जनं द्विवर्णमापद्यते। यथा, अर्चन्त्यर्कमर्किणः। अर्क्येण वै। ऊर्ग्ग्वा उदुम्बरः। स्वरपूर्वत्वद्वित्वयोः(४) आकर्षकः 'च'कारः। ननु व्यञ्जनपरत्वाकर्षकः किं न स्यात्। नेति ब्रूमः। नियमाभावात्। तथाहि, अवसाने, जश्चा स्वरपर इति एतन्निषेधद्वयेन रेफात्परस्य स्वरपरत्वाभावे व्यञ्जनपरत्वाभावेपि(५) द्वित्वमस्तीति निश्चीयते, अप्रसक्तप्रतिषेधानुपपत्तेः। स्वरपूर्वत्वान्वादेशेन किं। त्र्यम्बकमित्यादौ माभूदिति। किञ्च। अचो रहाभ्यां द्वे इति पाणिनीयसूत्रेणापि स्वरपूर्वत्वे सत्येव द्वित्वं विधीयते। तस्यायमर्थः, अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवत इति केचिदूचुः(६)। स्वरपूर्वादित्यव्ववद्रेफपूर्वमिति वक्तव्ये रेफात्परमिति वाचो युक्त्यन्तरमर्थान्तरं समर्थयति(७)। अहर्देवानामित्यादौ वैकृतरेफादुत्तरस्यान्तस्य

---

१ सूत्रान्तरारम्भेण चेति ग०,इ०मु० च।

२ पौष्करसादेर्मते इति ग०।

३ न तु पूर्वमिति ग०।

४ स्वरपूर्वद्वित्वयोरिति ग०,इ०मु०च।

५ रेफात्परस्य व्यञ्जनस्य व्यञ्जनपरत्वाभावे स्वरपूर्वत्वेपि इति इ० मु०। रेफात्परस्य व्यञ्जनपरत्वाभावे च स्वरपूर्वत्वेपि इति ग०।

६ विधीयते। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे स्त इति सूत्रार्थः। केचिदेवमूचुरिति ग०।

७ रेफात् पूर्वमिति वाच्ये वाचो युक्त्यन्तरमर्थान्तरं समर्थयति इति ग०, इ० मु० च।

न द्वित्वमिति(१)। तदेतदध्ययनविरुद्धपद्धतिमध्यास्ते। वयन्तु वदामो(२), वाचो युक्त्यन्तरप्रयोजनं। रेफपूर्वमित्युक्तेविरुद्धविग्रहेण(३) सूत्रं सन्दिग्धं स्यात्, रेफात् पूर्वं रेफपूर्वमिति। तत्र एष विग्रह इति चेत्(४)। अध्यायादिसूत्रेणैतद्गतमिति पौनरुक्त्यमस्य सूत्रस्यापद्यते। ननु पौनरुक्त्यभयादेव विरुद्धविग्रहं निवारयामः। नेयं सरला वृत्तिः। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् अत्र विरुद्धशङ्कालेशोपि नावकाशं लभतामिति वाचो युक्त्यन्तरेण सूत्रमाचार्य्यः प्रोवाच(५)॥

## द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः ॥ ५ ॥

स्वरपूर्वयोर्व्यञ्जनोत्तरयोर्द्वितीयचतुर्थयोस्तु पूर्व आगमो भवति(६), यथाक्रमेण द्वितीयस्य प्रथमः, चतुर्थस्य तृतीयः। यथा, विक्ख्याय चक्षुषा त्वमभितिष्ठ। मेग्घ्या विद्युतो वाचः। (७)द्वितीयचतुर्थयोरिति किं। आद्यमस्यान्नं। एवम्पूर्वयोरिति किं(८)। वट् स्वयमभिगूर्त्ताय नमः,(९)। पङ्क्त्यां द्वे षवने। एवम्परयोरिति किं।

---

१ वैक्षतरेफाद्वित्तरस्य न स्याद्वुत्वमिति इति इ० मु०।

२ अन्ये त्वेवमाहुरिति ग०।

३ विरुद्धाविरुद्धविग्रहणेनेति ग०।

४ रेफपूर्वमिति। भवत्वेष विग्रह इति चेत् इति ग०, इ० मु० च।

५ लेशोपि नास्तीति सूत्रकार आह। वयं ब्रूमो युक्त्यन्तरं प्रयोजनस्वरभक्तेर्द्वित्वं माभूदितीति ग०।

६ आगमः स्यादिति ग०।

७ तत् सवितुः साद्ध्या वै देवा इति इ० मु० पुस्तकेधिकः पाठः।

८ एवम्पूर्वः किमिति ग०। एवम्पूर्व इति किमिति इ० मु०।

९ वषट्थ् स्वाहेति ग०।

उखायै सदने । मेधायते स्वाहा । प्रथमसूत्रेण प्रसक्तं द्वित्वं निवर्त्तयति 'तु'शब्दः । अन्येत्वन्यथा मन्यन्ते(१), पूर्व्वागमस्य द्वित्वं निवारयतीति(२) । नैतत्सारं । सवर्णसवर्गीयपर इत्युत्तरनिषेधादेव तस्य तन्निवृत्तिः(३) ।

अत्रकेचिदाहुः, व्यञ्जनपर इति वाच्ये वाचो युक्त्यन्तरमर्थान्तरं(४) सूचयति । साꣳहितासाꣳहितसाधारणं परनिमित्तमुक्तं, तत इहान्यतरस्यागमनिमित्तत्वे(५), प्राप्तेऽसाꣳहितपदानां नित्यत्वात्तद्ग्रहणमेव न्याय्यमिति कृत्वा वैकृतव्यञ्जनपरत्वे सति नैतद्विधानं भवति । यथा, अभ्यस्थादित्यादि । नायं पक्षः । अध्ययनधर्म्मविरोधात्(६) मूलसूत्रविरोधाच्च । तथाहि, तन्मूलसूत्रे(७) स्वरपूर्वत्वे व्यञ्जनमात्रपरत्वे च सति विहितं द्वित्वमत्र निषेध्यते(८) । नतु तत्र व्यञ्जनविशेषिते(९) तदपवादकत्वादत्रापि तद्विशेषो वक्तुमयुक्तः । शिक्षादिपरीक्षणादध्ययनानुरोधाच्च वाचो युक्त्यन्तराभिप्रायोऽस्माभिरभिधीयते(१०) । अपवाद्यापवादकयोरनयोर्नियमो नास्ति, किमिति । स्वरपूर्वत्वे सति व्यञ्जन-

---

१ अन्ये त्वन्यथाहुरिति ग० ।

२ द्वित्वं नेतीति ग० ।

३ इत्युत्तरत्र निषेधादेव तन्निवृत्तिरिति ग० ।

४ व्यञ्जनपरयोरिति वाच्येऽर्थान्तरमिति ग० ।

५ तत्र इहान्यतरस्यागमनिमित्तत्वे इति ग० ।

६ अध्ययनविरोधादिति ग०, इ० मु० च ।

७ मूलसूत्रे इति ग०, इ० मु० च ।

८ द्वित्वमात्रं निषिध्यते इति ग० । द्वित्वमत्र निष्पाद्यते इति इ० मु० ।

९ व्यञ्जनविशेषितमिति ग० । व्यञ्जनं विशेषितमिति इ० मु० ।

१० अस्माभिरुच्यते इति ग० ।

परमेव व्यञ्जनं द्वित्वं भजते। द्वितीयचतुर्थौ तु[1] व्यञ्जनपरावेव पूर्वागममभजत इति। किन्तु प्राचुर्य्याभिप्रायेणेदं सूत्रद्वयं प्रवृत्तं[2] कथं नियमाभावः। अन्यथा[3] कुत्रचित् कार्य्यद्वयदर्शनात्। अत्ता हवींꣳषि अन्नपत इत्यादौ द्वित्वं। वियच्छदः[4]। अद्धि त्वं देव प्रयत इत्यादौ पूर्वागमः। ताꣳहस्ते इत्यत्र तु प्राप्तौ सत्यामपि नेदं कार्य्यं दृश्यत इति च नियमाभावः। शिक्षा चैवं वक्ष्यति,

> स्वरात् पूर्वस्य वर्णस्य क्वचिद्द्वित्वञ्च कथ्यते।
> न च वर्गद्वितीयस्य न चतुर्थे कथञ्चन[5]॥

व्याख्यातञ्च वचनमेतद्विद्वद्भिः।

> कुत्रचित् स्वरयोर्मध्ये द्वित्वं लक्ष्यानुसारतः।
> पूर्वागमस्तथा तत्र ज्ञेयो वर्णविचक्षणैः॥

एवं रूपमनियमं सूचयितुं व्यञ्जनोत्तरयोरित्यन्तरस्वीकारः। व्यञ्जनमुत्तरं याभ्यान्तौ व्यञ्जनोत्तरौ, तयोः॥

## रेफपूर्वयोश्च नित्यं॥ ६॥

रेफात्परञ्च, इत्यस्यापवादः[6]। क्रमेण द्विवचनेन द्वितीयचतुर्थौ गृह्येते, न सविशेषणौ[7] रेफपूर्वयोरनयोर्नित्यं[8] पूर्वा-

---

१ द्वितीयचतुर्थौ चेति इ० मु०।

२ किन्तु प्राचीनाभिप्रायेणेदं सूत्रद्वयं प्रज्ञातमिति ग०।

३ अन्यथापीति ग०।

४ प्रच्छच्छन्द इति ग०, इ० मु० च।

५ चतुर्थे कदाचन इति ग०, इ०मु० च।

६ इत्यस्यापवादकमेतदिति इ० मु०।

७ गृह्यते सविशेषणयोरिति इ० मु०।

८ रेफपूर्वयोरुभयोर्नित्यमिति ग०।

गमो भवति। आगमान्वादेशकः, 'च'कारः। यथा, ऊर्द्धा भव। अद्‌र्ध्वाङ्। नित्यमिति किं। स्वरपरत्वे(१) भवत्येतदिति। अध्यर्धैतस्याताम्(२)। मूर्धान्तज्जवन्यां। गो अर्घमेव॥

## लकारपूर्वे च॥ ७॥

चतुर्थागमयोराकर्षकः, 'च'कारः। चतुर्थे स्पर्शे लकारपूर्वत्वे(३) सति पूर्वागमो भवति। प्रगल्भ्भोस्य अपगल्भ्भो जायते। नमो मध्यमाय चापगल्भ्भाय च। यस्माल्लकारः पूर्वः, स लकार पूर्वः(४)॥

## उपसर्गपाथ-एषोऽत्याति-धाम-परम-भूते-पूर्वेषु क्खिभु-जेषु च॥ ८॥

उपसर्गेषु(५) पाथः, एषः, अति, आति, धाम, परम, भूते, एवम्पूर्वेषु च सत्सु छ्खिभुज इत्येतेषु पूर्वागमो भवति। 'च'कार आगमान्वादेशकः। यथा, आच्छृणत्ति। आख्खिदत्ते च प्रख्खि-दत्ते च(६)। अयच्मया परिभ्भुजा। जे इति किं। विभू च मे प्रभू च मे। या च विच्छन्दाः। खीति किं। (७)निखातं मनुष्याणां।

---

१ स्वरपरत्वेपीति ग०, इ० मु० च।

२ अर्थैतस्येति ग०। अर्थैतस्यापामिति इ० मु०।

३ चतुर्थस्पर्शे लकारपूर्वे इति ग०,इ०मु०च।

४ लकारः पूर्वो यस्मात् असौ लकारपूर्वः तस्मिन् इति ग०, इ० मु० च।

५ उपसर्गपूर्वेषु इति ग०,इ०मु० च।

६ नम आख्खिदते च प्रख्खिदते चेति इ० मु०।

७ तौ बल्गं निखनत इति ग-चिह्नितेधिकः पाठः।

अधिखखादिति(१)। उपसर्गपूर्व इति किं। सच्छन्दाः(२)। एतान्युपसर्गपूर्वाणि । अन्यान्यप्युच्छन्ते(३)। अप्येति पाथः(४)। एष च्छागः। पाथ इति किं। ऋतुभिर्वा एष छन्दोभिः। अतिच्छन्दसमुप(५)। सवित्र आतिच्छन्दसाय। धामच्छद्दिव(६)। परमच्छदो यज्ञते च्छदाꣳसि सामानि(७)॥

**अघोषादूष्मणः परः प्रथमोऽभिनिधान स्पर्शपरात्तस्य सस्थानः॥ ९॥**

स्पर्शपरादघोषादूष्मणः परः प्रथम आगमस्तस्य स्पर्शस्य सस्थानः समानस्थानोऽभिनिधानो भवति। अभिनिधीयत इति अभिनिधानः। आरोपणीय इत्यर्थः। वेदान्तरे तस्याभावादनारोपणीयत्वं। यथा, यꣳक्कामयेत। अश्मन्नूर्ज्जं। ग्रीष्मे मध्यन्दिने। अयस्मयं विभृत(८)। यः पाप्मना। अघोषादिति किं। ग्ररद्यपराह्णे। ऊष्मग्रहण इति किं(९)। रुक्ममुपदधाति। स्पर्शपरादिति किं। इष्वा च वज्रेण च। सूत्रमिदमेवेष्टं। नतु परद्वयं।(१०)॥

---

१ इतस्त्वधिखादिति इति इ० मु०।
२ सच्छन्दाया इति ग०।
३ अन्यान्युच्छन्ते इति ग०, इ० मु० च।
४ प्रियं अप्येतु पाथ इति इ० मु०।
५ अतिच्छन्दसमुपदधातीति ग०, इ० मु० च।
६ धामच्छद्दिव खलु वै इति इ० मु०।
७ छन्दांसि सामानि भवन्तीति ग०।
८ रस्मेप्मयं विचृता बभ्रं इति ग०। अयस्मयं विचृताबन्धमिति इ० मु०।
९ ऊष्मण इति किमिति इ० मु० च।
१० न तत्परद्वयमिति इ० मु०।

## अघोषे प्लाक्षेः ॥ १० ॥

अघोष एव स्पर्शे परे सति अघोषादूष्मणः परः प्रथमागमी भवतीति प्लाक्षेः पक्षः। यथा, निष्क्केवल्यं। यश्क्कामयेत([1]) पश्चात् प्राचीं। निष्टत्पामि। ([2])दोषावस्त्तोः। यः पाप्पना। असप्पात्रम्([3])। अघोषेति किं([4])। कूश्मान्([5])॥

## उत्तमपरात्तु प्लाक्षायणस्य ॥ ११॥

प्लाक्षायणस्य तु पक्षे उत्तमपरादघोषादूष्मणः परः प्रथमागमी भवति। यथा, अक्ष्णया व्याघारयति। अश्न्नाति। ([6])उत्तमपरादिति किं। निष्केवल्यं। यश्क्कामयेत पश्चात्। ([7])'तु'शब्दः प्लाक्षेः पक्षमपक्षिपतीति([8]) केचिदेवमूचुः। अघोषत्वमूष्मणः, 'तु' शब्दो निवर्त्तयति([9])। तत्रायं सूत्रार्थः। उत्तमपराद् घोषवतः ([10])ऊष्मणः परः प्रथमागमी भवति। अक्ष्नां क्केतुः। शरद्यपराह्णे। ब्रह्मवादिनः। घोषवत इति किं। ग्रीष्मो हेमन्तः। अश्मा च मे। अयस्मयं वि([11])॥

---

१ यः कामयते इति ग०।

२ अक्ष्णया व्याघारयति इति ग०, चिह्निते इ० मु० पुस्तके च अधिकः पाठः।

३ आस्पात्रं जुहूर्देवानामिति ग०, इ० मु० च।

४ अघोष एवेति किमिति ग०, इ० मु० च।

५ कूश्मान्छकमिति इ० मु०।

६ तीर्थे स्नाति इति ग०, चिह्निते, इ० मु० पुस्तकेचाधिकः पाठः।

७ यः पाप्मना इति इ० मु० पुस्तकेऽधिकः पाठः।

८ पक्षं प्रक्षिपतीति इ० मु०। पक्षमपक्षिपतीति ग०।

९ निवर्त्तयतीति इति ग०, इ० मु० च।

१० उत्तमपरात्तु घोषवत इति इ मु०।

११ विवृत इति इ० मु०।

## प्रथम ऊष्मपरो द्वितीयं ॥ १२ ॥

प्रथमः स्पर्श ऊष्मपरः स्ववर्गीयद्वितीयमापद्यते(१) । विरफ्शिन्(२) उदादाय । तथ् षोडशी(३) । प्रत्यङ्ख् सोमः । तथ् सवितुः । प्रथम इति किं । ताः सं रोहः(४) । ऊष्मपर इति किं । वाक्ते(५) ।(६) ऊष्मा परो यस्मात्स ऊष्मपरः(७) ॥

## वाडभीकारस्यासस्थानपरः ॥ १३ ॥

वाडभीकारस्य मते आत्मनोसस्थानोष्मपरः प्रथमः सवर्गीयं द्वितीयमापद्यते । समानं स्थानं यस्यासौ सस्थानः, न सस्थानः, असस्थानः । सः परो यस्मात्सः, तथोक्तः । यथा, विस्पो विरफ्शिन् । तथ् षोडशी । असस्थान इति किं । तत्सवितुः । नेदं सूत्रमिष्टं ॥

---

१ सवर्गीयं द्वितीयमापद्यते इति ग०, इ० मु० च ।

२ विसृपो विरप्शिन् इति इ० मु० ।

३ षोडशी अभवत् इति इ० मु० ।

४ संरोहोसि इति ग० ।

५ वाक्त आप्यायतामिति इ० मु० ।

६ (ततः) अर्वाक् हि एनं परैः, इत्यत्र प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं, इति हकारस्य चतुर्थापत्तिः, विशेषविहितत्वात् । ततः तृतीयं स्वरघोषवत्परस्तृतीयत्वम् । इदमेव सूत्रमिष्टम् । इति इ० मु० पुस्तकेऽधिकपाठः ।

७ यस्मादसावूष्मपर इति ग०, इ० मु० च ।

**अथ न ॥ १४ ॥**

'अथ' इत्ययमधिकारः। उक्तस्य द्वित्वविधेर्यथासम्भवं निषेधोऽधिक्रियते, इति(१) वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः ॥

**अवसाने रविसर्ज्जनीयजिह्वामूलीयोपध्मानीयाः ॥ १५ ॥**

पदावसाने वर्त्तमानो वर्णो रेफो विसर्ज्जनीयो जिह्वामूलीय उपध्मानीयश्च(२) इत्येते वर्णा द्वित्वं नापद्यन्ते। यथा, ऊर्क्। रेफात् परश्चेति(३) प्राप्तिः। अवसानवचनं विरामाभिप्रायम्। तस्मान्न सन्धाने निषेधः। यथा, ऊर्क्क् च मे सूनृता(४)। नार्त्तिमार्च्छन्ति(५)। मनᳶक्चमे। यᳶक्कामयेत। यᳶपाप्मना। स्वरपूर्व्वमित्यनेनैषां प्राप्तिः। अवसान इति चतुर्णां(६) पृथगेव सूत्रं केचिदूचुः। एकीकरणे(७) दोषदर्शनात्। कोसौ दोषः(८)। अवसाने वर्त्तमाना विसर्ज्जनीया(९) इत्यन्वयसम्पादनं। अवग्रह आशीर्धूः सुवरितिवदिति चेत्। नैष दोषः। रविसर्जनीयादीनां पदावसाने द्वित्वप्राप्तिर्दूरोत्सारिता, इति नेयमत्र

---

१ निषेधोधिकृत इत्येतदधिकृतमिति ग०, इ० मु० च।

२ रेफविसर्जनीयजिह्वामूलीयोपध्मानीयाश्चेति ग०।

३ परश्चेतीति ग०, इ० मु० च।

४ सूनृता च मे इति ग०, इ० मु० च।

५ नार्त्तिमार्च्छति ग०, इ० मु० च।

६ चतुर्णां वर्णानामिति इ० मु०।

७ एकीकरणपक्षे इति ग०।

८ असौ दोष इति इ० मु०।

९ रेफविसर्जनीयादय इति ग०, इ० मु० च।

शङ्का(१)। किञ्च पृथक्करणे(२) सति अवसाने किं वा भवतीति साकाङ्क्षतया वचनमनर्थकं स्यात्। एकीकरणे तु रविसर्जनीय इति वर्णसाहचर्य्यादवसाने वर्त्तमानो वर्ण इति च लभ्यते(३)। तस्मादेकीकरणमेव रमणीयम्॥

## ऊष्मा स्वरपरः॥ १६॥

स्वरपर ऊष्मा द्वित्वं नापद्यते। स्वरः परो यस्मादसौ स्वरपरः। यथा, दर्शपूर्णमासौ। वर्षाभ्यः। वर्षं नह्यति। बर्हिषा। रेफात् परस्येति प्राप्तिः। ऊष्मेति किं। एभिर्नृभिर्नृतमो अर्कैः। स्वरपर इति किं। पार्श्वं। वर्ष्याभ्यः(४)। वर्षिष्ठेभिः। अग्निर्ह्यस्य॥

## प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः॥ १७॥

तयोः पक्षे(५) प्रथमपर ऊष्मा द्वित्वं नापद्यते। 'च'कार ऊष्माणमन्वादिशति। सुश्चन्द्रदस्म। अष्टौ क्षत्वः। तस्मादेवं विदुषा। प्रथमः परो यस्मादसौ प्रथमपरः(६)। 'च'कारोऽत्र यद्यप्यू-

---

१ शङ्कास्तीति ग०, इ० मु० च।

२ अवसाने पृथक्करणे इति इ०मु०।

३ इति लभ्यते इति इ० मु०, ग० च।

४ वर्ष्याभ्यः स्याद्वेति इ० मु०।

५ प्लाक्षिप्लाक्षायणयोः पक्षे इति इ० मु०, ग० च।

६ अष्टौ क्षत्वः। तस्मादेवं विदुषा। प्रथमः परो यस्मादसौ प्रथमपरः। प्रथमपर इति किं। इष्वा च वज्रेण चेति ग०। अष्टौ क्षत्वः। प्रथमपर इति किम्। तस्मादेवं विदुषा। प्रथमः परो यस्मादसौ प्रथमपर इति इ० म०।

समासाकर्षकः, तथापि प्रपसहेष्वेव सम्प्रत्ययः। अन्यथा अवसाने रविसर्जनीयः, इति सूत्रे जिह्वामूलीयोपध्मानीययोर्ग्रहणं व्यर्थम्। अनेनैव निषेधसिद्धेः॥

## ऊष्माघोषो हारीतस्य॥ १८॥

हारीतस्य मते अघोष ऊष्मा द्वित्वं नापद्यते। वैश्यो मनुष्याणां। पुष्यति प्रजया पशुभिः। अस्यापरूपं(१)। अघोष इति किं। मह्यमिमान्(२)। ऊष्मग्रहणं पूर्व्वसूत्रानापेक्षार्थम्। अत्राप्यूष्मग्रहणं(३) न क्रियेते। ऊष्मेत्येतत् स्वरपरत्वेन पृथक्कारत्वेन च सम्बन्धं(४)। तस्मादिहापि तत्सम्बन्धस्यैवाघोषत्वविशेषणं स्यात्(५)। अतस्तन्निवृत्त्यर्थमूष्मेति ग्रहणं कृतम्(६)। अतः सर्व्वावस्थ ऊष्मात्र निषेधभाक्॥

## रेफपरस्य हकारः॥ १९॥

पूर्व्वमूष्माघोष इत्युक्ते घोषोष्मणो नित्यद्वित्वे(७) प्राप्ते विशिनष्टीदानीं(८)। रेफपरो हकारस्वकारात्कृष्टहारीतमते द्वित्वं नापद्यते। यथा, दुदुह्रे अर्हयः। रेफपर इति किं। जुह्वे ह्-

---

१ वैश्वानरस्य रूपमिति ग०।

२ गिरो अक्रियामिति ग०।

३ अत्र यद्यप्यूष्मग्रहणमिति ग०।

४ स्वरपरत्वेन प्रथमपरत्वेन च सम्बद्धमिति ग०।

५ सम्बन्धस्यैवाघोषत्वविशेषो न स्यात् इति ग०। तत्सम्बन्धस्यैवाघोषत्वविशेषः स्यादिति इ० मु०।

६ ग्रहणमत्र कृतमिति ग०। इ० मु० च।

७ नित्यं द्वित्वे इति ग०, इ० मु० च।

८ विशिष्ट इदानीमिति इ० मु०।

ह्यग्निः(१)। हकार इति किं। शुक्रन्ते अन्यत्। रेफः परो यस्मादसौ, रेफपरः॥

## टवर्गश्च तवर्गपरः॥ २०॥

'च'कारो हारीतलान्वादेशकः(२)। टवर्गस्तवर्गपरो न द्वित्वमापद्यते। यथा, वषट् ते विष्णो। विड् द्रविणं। तवर्गः परो यस्मादसौ तवर्गपरः। टवर्ग इति किं। वाक्ते। तत्ते। एवम्पर इति किं। षट्ट् कपालं(३)। विड्ड् वै मरुतः॥

## लतवर्गौ यवकारपरौ॥ २१॥

हारीतः सान्निध्याल्लभ्यते। तन्मते लतवर्गौ न खलु यवकारपरौ द्वित्वमापद्यते(४)। यथा, लकारः, कल्याणी। वैल्वो यूपः(५)। तवर्गोपि(६)। कन्येव तुन्ना। इषे त्वा। यवकारौ परौ याभ्यान्तौ, तथोक्तौ॥

## परश्च॥ २२॥

'च'कारो हारीताकर्षकः। पर इत्येकवचनेन चकारो गृह्यते। पूर्व्वसूत्रोक्तस्थनिमित्तयोः परः(७) सोपि न द्वित्वमापद्यते,

---

१ जुह्वे ह्यग्निस्ताक्रयति, इति ह० मु०।
२ हारीतान्वादेशक इति ग०, ह० मु० च।
३ षट्कपालं निः, इति ग०, ह० मु० च।
४ द्वित्वमाप्नुत इति ग० ह० मु० च।
५ यूपो भवतीति ह० मु०।
६ तवर्गेपीति ग०, ह० मु० च।
७ पूर्वसूत्रस्थनिमित्तयोर्यः पर इति ग०।

हारीतमते। यथा, विभूदाव्ने[१]। ग्राव्ण:[२]। वकार इति किं। कल्ल्यान् जुहोति। स्पर्श एवेत्येकेषामित्यत्रावधारणानिराकरणायायमारम्भः[३]। [४]द्वित्वे कृते परो द्वितीयपर्य्यायो द्वित्वविधिर्नास्ति। अनवस्थाप्रसङ्गात्। ननु सवर्णसवर्गीयपर इति परसूत्रेणापि पुनर्द्वित्वनिषेधः। पौनरुक्त्यं माभूदिति[५]। मतभेदान्नैष दोष इति ब्रूमः। हारीतमतमेतत्, ऊष्मा घोषो हारीतेत्यादिसूत्रपञ्चकमनिष्टं[६]॥

## सवर्णसवर्गीयपरः॥ २३॥

सवर्णपरः सवर्गीयपरश्च द्वित्वं नापद्यते। सवर्णत्वं नाम सादृश्यमुच्यते[७], न तुल्यस्थानकरणतामात्रं। सवर्गीयः समानवर्गसम्बन्धी। यथा, अत्वक्काय। अत्ता हवींषि। पिप्पका ते[८]। संयत्ताः। यन्नोहितं। त्वं वातैः[९]। सवर्णपराण्येवमादीनि

---

१ विभूदावन्ने इति ग०।

२ आ ग्राव्ण इति इ० मु०।

३ स्पर्श एवैकेषामाचार्याणामित्यत्रावधारणनिराकरणायायमारम्भ इति इ० मु०। अत्र ग, चिह्नितपुस्तके अवधारणे निराकरणेयमारम्भ इतिविशेषः।

४ ग, चिह्निते इ० मु० पुस्तके च 'अथ वा' इत्यधिकपाठः। इ०मु० पुस्तकधृतमस्य पाठान्तरं 'यथा' इति।

५ पुनर्द्वित्वनिषेधात्पौनरुक्त्यमाशङ्क्यात इति केचिदिति ग०।

६ हारीतमते ऊष्मा घोष इत्यादि सूत्रपञ्चकमिष्टमिति ग०। हारीतमतादूष्मा घोष इत्यादि सूत्रपञ्चकमनिष्टमिति इ० मु०।

७ सारूप्यमुच्यते इति ग०, इ० मु० च।

८ ते शरव्यायै इति इ० मु०।

९ त्वं वातैररुणैरिति इ० म०।

सवर्गीयपराण्यपि([1]) वदामः। अङ्क्तो न्यङ्क्तो। प्राङ्क्षमुप। काण्डात् काण्डात्। तन्ते दुग्धचाः। अभ्रस्थ॥

अनुनासिकपूर्वस्तु ककारो मध्य आगमः।
गकारस्य तकारे च धकारे च यथाक्रमम्॥

इति वचनादिदमप्युदाहरणं। पाङ्क्तो यज्ञः पाङ्क्ताः। तान् ब्रूयाद्युङ्ध्वमिति। एवम्पर इति किं। वाङ् मे आसन्। मण्मासः। विद्यानि मन्महे। दाम्नापा([2])॥

## नानुत्तम उत्तमपरः॥ २४॥

'न'कारोऽयं प्रतिप्रसवार्थः। उत्तमपरोऽनुत्तमो द्वित्वमापद्यत इति([3])। यथा। याच्ञा। यज्ञे यज्ञेन। आट्ट्णारः। स प्रत्नवत्। पाप्मानं। अनुत्तम इति किं। तन्मा देवाः। उत्तमः परो यस्मादसावुत्तमपरः। सवर्णसवर्गीयपर इति प्राप्तावयमारम्भः([4])॥

## अथैकेषामाचार्य्याणां॥ २५॥

'अथ' इत्यधिकारः। एकेषां मतमधिक्रियत इत्येतद्वेदितव्यं([5]), इत उत्तरं यद्वक्ष्यामः॥

---

१ सवर्गपराण्यपीति ग०। सवर्णपराण्यपीति इ० मु० पुस्तकधृतपाठान्तरं।

२ दाम्नापौभ्मन् इति इ० मु०।

३ ग, चिह्निते इ० मु० पुस्तके च 'इति' पदं नास्ति।

४ इति प्रतिषेधप्राप्तावयमारम्भ इति ग०, इ० मु० च।

५ एकेषां मते क्रियत इत्येतधिकृतं वेदितव्यमिति ग०, इ० मु० च।

## लकारो हशवकारपरः ॥ २६ ॥

एकेषां मते हशवकारपरो लकारो द्वित्वं नापद्यते। मह्ला आलभेत(१)। वल्शो विरोह(२)। ततो विल्वः(३)। एवम्पर इति किं। कल्माषी। कल्याणी। हकारश्च शकारश्च वकारश्च हशवकाराः, ते परे यस्मात् सः, तथोक्तः। अत्र हशपरे कार्य्य मिष्टं, न तु वकारपरे। नापि परसूत्रमिष्टं(४)॥

## स्पर्श स्पर्शपरः ॥ २७ ॥

एकेषां मते स्पर्शपरः स्पर्शो न द्वित्वमापद्यते। वाग्देवी। आपामोज्मानं। आट्णारः। सप्तव्रवत्। यमप्रवानः। स्पर्शः परो यस्मा दसौ स्पर्शपरः॥

## पदान्तश्च व्यञ्जनपरः प्राकृतः ॥ २८ ॥

व्यञ्जनपर इति स्पर्शव्यतिरिक्तव्यञ्जनपर इत्यर्थः। अन्यथा स्पर्शानामपि ग्रहणे पूर्वसूत्रेपि स्पर्शपर(५) इत्युक्तत्वात् पौनरुक्त्यं

---

१ आलभन्त इति ग०, इ० मु० च।

२ शतवल्शो विरोह इति ग०, इ० मु० च।

३ वैल्वो यूप इति इ० मु०।

४ न तु वकारपरे लकारस्य हश् वकारपर इति सूत्रे स्थितः।किं कारणं। न तु चकार इति प्रयोजनमस्ति। लकारस्य वकारस्य संयोग स्वरितो यदि। तदा संयुक्त एव स्यादसंयुक्तस्तदन्यथा इति वचनमस्ति। तस्मात् कारणात्, यदा लकारवकारयोः स्वरितसंयोगलकारस्य तदा द्वित्वमस्ति। असंयुक्तो द्वित्वं नास्तीति गमनिका। अत एव न तु वकारपर इति। ततो विल्वः। नापरसूत्रमिष्टं। इति ग,चिह्नितपुस्तकेऽधिकः पाठः।

५ स्पर्श इति इ० मु०।

स्यात्। न तु निमित्तविशेषनिमित्तिविशेषोऽप्यस्ति(१)। पदान्तत्वं प्राकृतत्वञ्च निमित्तिनो विशेषः। निमित्तस्य तु सर्व्वव्यञ्जनात्मकत्वमिति चेत्। तथापि स्पर्शभागे निमित्तविशेषस्य वैयर्थ्यं। स्पर्शपर इत्यत्र सामान्येन(२) निमित्तविशेषस्य विगतत्वात्। तस्मादन्तस्था यरलवा इत्यत्र(३) व्यञ्जनशब्देनोच्यन्ते। 'च'-कारस्पर्शाच्चरपारिशेष्यान्नकारस्याकर्षणं(४)। तथाहि, अन्तस्थादिव्यञ्जनपरत्वे सत्यन्यस्पर्शानामविकृतानां पदान्ते स्थितिर्नास्ति। सम्राडित्यत्रास्तीति चेत्। मैवं(५)। न सम्राममिति रापर इत्यत्र वैयर्थ्यात् इति शब्दो मकारस्य द्वित्वसद्भावं बोधयतीत्यध्ययनानुरोधादुपपादितं। तस्मान्नैष निषेधविषयः। नापि ब्रह्मण्वन्तः, न्यङ्ङ्रश्मिभिः, इत्यादिविषयः। कुतः, इह प्राकृत इति विशेषणं विकृतसद्भावं कल्पयति। अन्यथा स्वस्ववैयर्थ्यात्(६)। तच्च विकृतित्वं नकारस्य(७) ङकारस्य वा अन्तस्थादिपरत्वे सति क्वचिदपि पदान्ते न दृश्यते। तस्मात् प्राकृत इति प्रयोगसाफल्याय नकारस्यैवानुकर्षणं युक्तमिति पारिशेष्यम्। किञ्च माहिषेयेऽपि नकारस्यैवानुकर्षणं सिद्धवत्कृत्योक्तं। तत्रैवं (८)सूत्रयोजना। एकेषां मते पदान्तः प्राकृतो नकारोऽन्तस्थादिव्यञ्जन-

---

१ न तु निमित्तिविशेषान्निमित्तविशेषोस्ति इति ग०, इ०मु० च।

२ सामान्येनापि इति ग०,इ०मु०च।

३ तस्मादन्तस्थादय एवात्र इति ग०, इ० मु० च।

४ चकारो यद्यपि स्पर्शमात्राकर्षकस्तथापि पारिशेष्यान्नकारस्यानुकर्षणम् इति इ०मु०। ग,चिह्नितपुस्तके स्पर्शाकर्षकः, इति विशेषः। समानमन्यत्।

५ नैवमिति ग०।

६ स्वस्य वैयर्थ्यादिति ग०, इ०मु० च।

७ विकृतत्वं णकारस्येति ग०, इ० मु० च।

८ तत्रेयं इति ग०, इ० मु० च।

परो द्वित्वं नापद्यते। यथा, जनान् पाययति(१)। ओमन्वतीते। एतान् होमान्। पदान्त इति किं। अन्यायन्ति(२)। अन्तस्थादिपर इति किं। तान् कल्पयति। इमान् भद्रान्। दुर्य्यान्। प्राकृत इति किं। तान् रक्षध्वं। वैष्णवा रक्षोहणः। ननु कथमत्र विकृतत्वं।

रेफादृवर्णात् पूर्वस्य तवर्गाच्च परस्य नः।
तवर्गस्थान इत्याहुरन्तस्थानोन्यदुच्यते॥

इति वचनादस्ति स्थानभेदकृतं(३) विकृतत्वमिति ब्रूमः। शिक्षा चैवं वक्ष्यति,

रेफपूर्वो नकारो यः पदान्ते यत्र दृश्यते।
विशेषं तत्र जानीयाद् द्वित्वमित्यभिधीयते॥ इति।

व्यञ्जननमस्मात् परमिति(४) व्यञ्जनपरः। प्रकृतिरिति(५), स्वभावः, तत्सम्बन्धी प्राकृतः॥

## उदात्तात्परोऽनुदात्तः स्वरितम्॥२९॥

प्रातिहतपादवृत्ततैरोव्यञ्जनविषयमेतत्। उदात्तात्परोऽनुदात्तः स्वरितमापद्यते। यथा, स इधानः। अथाब्रवीत्। वस्यसि। प्रउगमुक्थ्यम्। तथा देवतया। वर्णविभागावस्थायामनुदात्तत्वे सत्येव पुनस्तत्संहितायामेतल्लक्षणात् स्वरितत्वं प्रउगमित्यादौ विज्ञेयं॥

---

१ मित्रो जनान् पातयतीति इ० मु०।
२ ग, चिह्नितपुस्तके इ० मु० पुस्तके च अन्वाहमास इति अधिकः पाठः।
३ स्थानभेदे कृतमिति इ० मु०।
४ पर इति ग०।
५ प्रकृतिः इति ग०, इ० मु० च।

## व्यञ्जनान्तर्हितोऽपि ॥ ३० ॥

व्यञ्जनान्तर्हितोऽप्युदात्तात् परोऽनुदात्तः स्वरितमापद्यते[१]। यथा, तदग्ने अनृणः[२]। यस्त्वा हृदा, इत्यादि। अन्तर्हितो व्यवहित इत्यर्थः ॥

## नोदात्तस्वरितपरः ॥ ३१ ॥

उदात्तपरः स्वरितो[३] वा अनुदात्तात् परोऽनुदात्तः स्वरितं नापद्यते। यथा, य इमं लोकं[४]। ता आद्याः। कीरिणा मन्यमानः। तस्यै वृद्धे[५]। उदात्तश्च स्वरितश्च उदात्तस्वरितौ, तौ परौ यस्मात् सः, तथोक्तः ॥

## नाग्निवेश्यायनस्य ॥ ३२ ॥

पूर्व्वसूत्रस्य प्रतिप्रसवार्थोऽयं[६] नकारः। उदात्तपरोऽनुदात्तः स्वरितमाग्निवेश्यायनस्य मते उदात्तात् परोऽनुदात्तस्वरितपरो वा स्वरितं नापद्यत इति[७]। पूर्व्वोक्तान्येवोदाहरणानि ॥

---

१ स्वरितं स्यादिति ग०।

२ अनृणो भवामीति इ० मु०।

३ उदात्तस्वरितपर इति इ० मु०।

४ सा इमां लोकाम् इति इ० मु०। स इमं लोकमिति ग०।

५ तस्यै वृद्धमिति ग०। तस्यै वृद्धामानन्दामजायत इति इ० मु०।

६ पूर्वसूत्रप्रतिप्रसवार्थायमिति ग०, इ० मु० च।

७ आग्निवेश्यायनमते उदात्तस्वरितपरो वा नापद्यते इति न इति ग०। आग्निवेश्यायनस्य मते उदात्तपरो वा स्वरितपरो वा नापद्यत इति न इति इ० मु०।

सर्वो नेत्येके सर्व्वो नेत्येके ॥ ३३ ॥

न केवलमुदात्तात् परः, किन्तु सर्व्व एव सप्तविधस्वरितो नास्तीत्येके शाखिनो मन्यन्ते। तथाहि वाजसनेयिब्राह्मणे, द्वावेव स्वरावुदात्तोऽनुदात्तः(१)। नेदं सूत्रद्वयमिष्टं ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्दशोऽध्यायः ॥ ० ॥

---

१० द्वावेव स्वरावुदात्तश्चानुदात्तश्चेति इ० मु०। द्वावेव स्वरावुदात्तानुदात्तौ इति ग०।

## अथ पञ्चदशोध्यायः।

### नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्व्व-स्वरोऽनुनासिकः ॥ १ ॥

नकारस्य रेफभावादूष्मभावाद्यकारभावाच्चकारात्कृष्टयकारे लुप्ते सति मलोपाच्च (१)। पूर्व्वस्वरोऽनुनासिको भवति, सानुनासिको भवतीत्यर्थः। यथा रेफभावात्, अग्नीँ रप्सुषदः(२)। अथोष्मभावात्(३), कर्णाँश्चाकर्णाँश्च। वीँस्तृचान्। यकारभावाद्यथा, महाँ इन्द्रः। यकारे लुप्ते यथा, महाँ इन्द्रः। अथ मकारलोपः(४), प्रत्युष्टँ रक्षः। सँशितं मे ब्रह्म। इत्यादि। मकारस्य लोपो मलोपः(५), तस्मात्॥

### नैकेषां ॥ २ ॥

एकेषां मते पूर्व्वसूत्रोक्तेषु सानुनासिकं(६) न भवति। उक्तान्येवोदाहरणानि। इदमेवेष्टं न तु पूर्व्वं॥

---

१ मकारलोपाच्चेति इ० मु०।

२ सप्तौ रेकादशां च्छि इतिइ० मु० पुस्तकेधिकः पाठः।

३ ऊष्मभावादिति ग०।

४ मकारलोपात् इति ग०।

५ मकारस्य लोपः, मकारलोप इति इ० मु०।

६ सानुनासिक्यमिति इ० मु०।

## ततस्त्वनुस्वारः ॥ ३ ॥

तत इति सर्व्वनाम्नः परामृष्टात् पूर्व्वस्वरात् ([1])परोऽनुस्वारागमो भवति। यथा, सावीᳪरेकादशाᳪ इह। परामृष्टस्य पूर्व्वस्वरस्यानुनासिकं गुणं([2]) तु शब्दो निवर्त्तयति। तस्मादनुनासिकप्रतिषेधपच्च एवायमनुस्वारागमः स्यात् ॥

## स्वादिषु चैकपद ऊष्मपरः ॥ ४ ॥

आगमान्वादेशकः,'च'कारः। स्वादिष्वेकपदे अखण्डपदे ऊष्मपरे सति([3]) अनुस्वारागमो भवति। यथा, शोᳪसामोद इव([4])। स्वादिष्विति किं। तासां त्रीणि च। एकपद इति किं। तं मा सᳪसृज। ([5])अखण्डविशेषणेन किं([6])। त्रिसाहस्रो वै। ऊष्मपर इति किं। माया मायिनां॥

## नान्तविकारात् पूर्व्वः ॥ ५ ॥

न खलु पदान्तविकारात् पूर्व्वस्मिन्ननुस्वारागमो भवति। वहिस्ते अस्तु([7])। हिपुजिगेति प्राप्तिः। अन्तविकारादिति किं मा हिᳪसीर्द्विपादं। अन्तस्य विकारः, अन्तविकारः, तस्मादन्तविकारात् ॥

---

१ स्वरादिति ग० इ०मु० च।

२ परामृष्टस्वरस्यानुनासिकं गुणमिति इ०मु०। परामृष्टस्वरस्यानुनासिकं गुणमिति ग०।

३ ऊष्मपरः इति ग०, इ० मु।

४ मोद इवेतीति ग०, इ० मु० च।

५ प्रस्तर मा हिंसीद इति इ० मु० पुस्तकेधिकः पाठः।

६ अखण्ड इति किमिति ग०।

७ अस्तु अवाखितीति ग०,इ० मु०च।

**अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषां॥ ६ ॥**

यानि समानाक्षराणि अप्रग्रहसञ्ज्ञानि तानि एकेषां मते भवन्त्यनुनासिकानि(१)। कुलायिनी(२)। अप्रग्रहा इति किं। अमी इति। तनू इति। समानाक्षराणीति किं। (३)सो एवैषैतस्याः। प्रग्रहाक्षरयोर्नियतलिङ्गतया परस्परान्वयो घटते। न प्रग्रहाः अप्रग्रहाः॥

**पदञ्च प्लुतꣳ शाङ्खायनकाण्डमायनयोः॥ ७॥**

यत् प्लुतवत् पदं तच्च पदकाले शाङ्खायनकाण्डमायनयोर्मते अनुनासिकं भवति। त्वौ३ इत्य ब्रवीत्। अस्तुहौ३ इत्यब्रूतां। पदमिति किं। संहितायां मा भूत्। 'च' शब्दः पूर्व्वसूत्रोक्तविधेयसमुच्चयं करोति। अपरे त्वाहुः(४)। प्लुतैकस्वरं पदमिति अन्यं मा भूत्। न छिनत्ति इति। न विचिन्त्या३ इति। नेदं सूत्रद्वयमिष्टं॥

**अकारस्तु सꣳहितायामपि॥ ८॥**

सान्निध्यादनुनासिकप्लुतौ गृह्येते। 'तु' शब्दः प्राक्तनाचार्य्यमतनिवर्त्तकः। अत एव संहितायामसंहितायाञ्च अकारः पदान्तोऽनुनासिको(५) भवति। यद्यकारः(६) इति सामान्योक्तः, तथाप्य-

---

१ एकेषां मते अनुनासिकानि स्युरिति ग०।

२ कुलायिनी वसुमतीतिग०। कुलायिनीं वसुमतीमिति इ० मु०।

३ साध्या वै इति ग० चिह्नितपुस्तके-विभिन्नः पाठः।

४ अपर आहुरिति इ० मु०।

५ अकारः पदान्तः प्लुतोऽनुनासिक इति ग०, इ० मु० च।

६ यद्यप्यकार इति ग०, इ० मु० च।

न्वादेशोऽन्त्यस्येतिवचनादपिशब्दोऽनुनासिकतया निमित्तं[१]पदान्तमेव चकारमन्वादिशति। यथा, सुश्लोकां३ सुमङ्गलां३। उपहूता३। यशोममां३। यदन्नां[२] इत्यन्यस्यां शाखायां। 'अपि'शब्दः किमर्थः। सत्यराजा३न्। अग्ना३ इत्याह। विचिन्त्यः सोमा३न विचिन्त्या३ इति। शाङ्खायनकाण्डमायनयोरप्ययं विधिरकारप्लुते[३] सम्मतः॥

## सर्व्वमेकयमं पूर्व्वेषा१ सर्व्वमेकमयं पूर्वेषाम् ॥ ९ ॥

एकजातमेकयमं[४] एकश्रुतिरिति पूर्व्वेषां[५] मतम्। यमो नाम स्वरः, उदात्त इत्यर्थः। पूर्व्वे नाम याज्ञिकाः, तेषां यज्ञकर्म्मणि सर्व्वमेकश्रुति भवति। अन्ये मन्यन्ते, पूर्व्वे नाम केचिच्छाखिनः, तेषां सर्व्वमेकश्रुतीति। अथापरे कथयन्ति[६], सर्वमेकस्वरमनुनासिकं भवतीति[७] समानाक्षरमात्रापेक्षामधिक्षेप्तुं। नेदं सूत्रमिष्टं॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे इत्यापस्तम्बानां शाखानां यजुर्वेदलक्षणः[८] पञ्चदशोऽध्यायः॥ ०॥

---

१ अननुनासिकधर्मतया निमित्तिनं इति ग०, इ० मु० च।

२ ब्रह्मा३म् इति इ० मु०।

३ विधिरकारे प्लुते इति ग०,इ०मु०च।

४ सर्वं वर्णजातमेकयममिति इ० मु०।

५ सर्वेषामिति ग०।

६ अपरे तु इति ग०।

७ भवतीति वदन्ति इतिग०।

८ इत्यापस्तम्बानां शाखानां यजुर्वेदलक्षण इति पाठो ग, चिह्निते इ० मु० पुस्तके च नास्ति।

# अथ षोडशोऽध्यायः ।

## अथ सकारपराः ॥ १ ॥

'अथ' इत्यधिकारः(१)। इत उत्तरे ग्रहणविशेषाः सकारपरा इत्येतदधिकृतं वेदितव्यं । सकारः परो येभ्यस्ते 'सकारपराः' ॥

## स्रशोह्नपाश पदादयः स्वरपरे ॥ २ ॥

'स्र, शो, ह्न, पा, श,' इत्येते ग्रहणविशेषाः(२) पदादयः सकारपराः, तस्मिन् सकारे स्वरपरे सत्यनुस्वारागमं भजन्ते । यथा, विस्रꣳसयेत्(३) । शोꣳसामोद इव(४) । ओकारेण किं । आशासाना(५) । ह्नꣳसः शुसिषत् । ह्रस्वेन किं(६) । प्रजा मा मा ह्नासीत् । पाꣳसुर इरावती । दीर्घेण किं । आहृतं गभेपसः । यदासीनः शꣳसति(७) । पदादय इति किं । अग्निरुक्थेन वाहसा । सोमं पिपासेत । दृह्नाशसः । स्वरपरे इति किं । विस्रस्य(८) । हस्तयोः । कविशस्तः । केचिदत्र सूत्रे ह्नियहणम-

---

१ अथेत्ययमधिकार इति ग०, द० मु० च ।

२ ग्रहणविशेषाणामिति ग० ।

३ विस्रंसयेदमेह्नेनाध्वर्युरिति ग०, द० मु० च।

४ इवेति, इति ग०, द० मु० च ।

५ आशासाना सौमनसमिति द० मु० ।

६ ह्रस्व इति किमिति ग०, द० मु० च ।

७ शंसति तस्मात् इति द० मु० ।

८ तस्मात् स विस्रस्य इति द० मु० ।

ङ्गीकुर्वते। तदनुपपन्नं(१)। पदादय इति नियमात्। अहिꣳसा(२), इत्यत्रानुस्वाराभावप्रसङ्गात्। ननु हिꣳसीः परम इत्येतदत्रोदाहरणमिति चेत्। तन्नैवं(३)। हिपुजिगा इत्यत्र नियमाभावात्। पदादावपदादौ च हिग्रहणस्य कार्य्यसिद्धेः पुनरत्र ग्रहणं व्यर्थं। स्वरः परो यस्मादसौ 'स्वरपरः,' तस्मिन्॥

## विकृतेऽपि॥ ३॥

'अपि'शब्दः स्वराभ्वादेशकः। सकारात् परे तस्मिन् स्वरे विकृतिमापन्नेऽपि व्यञ्जनतामुपगतेऽपि स्यादनुस्वारविधिः(४)। यथा, अपहꣳस्यग्ने॥

## रापूर्व्वस्य॥ ४॥

शग्रहं स्वादिषु चकारोऽन्वादिशति(५)। एतदर्थमेव स्वरव्यत्ययेऽपि शकारग्रहणं तत्रान्ते कृतं। रा इत्येवं पूर्व्वः शकारः सकारपरोऽनुस्वारागमं भजते। यथा, नाराशꣳसीभ्यः। अपदार्थोऽयमारम्भः॥

## शꣳस्तानन्तोदात्ते॥ ५॥

'शꣳस्ता,' इत्येतस्मिन् ग्रहणे अनन्तोदात्ते सकारपरेः(६)।

---

१ तन्नेति ग०।

२ अहिंसायामिति ग०।

३ उदाहरणमिति चेत्, नैवमिति ग०, इ० मु० च।

४ सकारात् परे स्वरेपि कृते व्यञ्जनत्वमापन्नेप्यनुस्वारविधिरिति ग०।

५ चशब्दः स्वादिषु शकारमन्वादिशतीति इ० मु०। स्वादिषु शकारमन्वादिशति चकार इति ग०।

६ सकारे इति ग०।

भवत्यनुस्वारागमः। उत सꣳस्तासुविप्रः (१) । अनन्तोदात्ते इति किं(२)। अश्वस्या विशस्ता। स्वर्योहेति प्राप्तौ सत्यां सकारस्य स्वरपरत्वाभावेऽपि नायं विधिर्निषिध्यतामिति पदग्रहणम्(३)। अन्ते उदात्तो यस्य तत् अन्तोदात्तं, न अन्तोदात्तं अनन्तोदात्तं, तस्मिन् ॥

## अशꣳसन् ॥ ६ ॥

'अशꣳसन्' इत्यस्मिन् ग्रहणे स्यादनुस्वारागमः। अभिव्यशꣳसन्। अपदाद्यर्थोयमारम्भः ॥

## न ग्रसनं विशसनेन ॥ ७ ॥

'ग्रसनं, विशसनेन,' इत्येतयोर्ग्रहणयोरनुस्वारागमो न भवति(४)। ग्रसनं वाज्यर्वा। श्मनो विशसनेन। स्वर्योहेति प्राप्तिः ॥

## मा पदादिरनुदात्तः ॥ ८ ॥

'मा' इत्येवं वर्णः पदादिरनुदात्तः सकारपरोऽनुस्वारागमं भजते। अत्र नियमाभावात् सकारस्य स्वरपरत्वाभावेऽपि निमित्तत्वं भवत्येव। यथा, अहर्माꣳसेन। माꣳस्पचन्याः(५)। पदादिरिति किं। सिलिकमध्यमासः(६)। अनुदात्त इति किं। मासं दीक्षितः(७) ॥

---

१ स्तुविप्र इति इ० मु०।

२ अनन्तरोदात्ते किमिति क०।

३ निषिध्यतामिति पदग्रहणमिति म०, इ० मु० च।

४ न स्यादिति इ० मु०।

५ मांस्पचन्या इति इ० मु०।

६ शिलिकमध्यमास इति इ० मु०।

७ दीक्षितः स्यादिति इ० मु०।

## पुमीपूर्व्वश्च नित्यं ॥ ९ ॥

'च'शब्दो मा इति ज्ञापयति। पु, मी, इत्येवम्-'पूर्व्वो' मा, इत्येवं वर्णः सकारपरो नित्यमनुस्वारागमं भजते। उत्पुमाꣳसꣳ हरन्ति। मीमाꣳसन्ते कार्य्ये। अनुदात्तत्वनियमनिवर्त्तको नित्यशब्दः(१) ॥

## सकायपरश्च॥ १० ॥

'च'शब्दो मा इति ज्ञापयति। मा, इत्ययं वर्णो 'सकायपरो' अनुस्वारागमं भजते। यथा, अमाꣳसकाय स्वाहा ॥

## नावग्रहपूर्व्वः॥ ११ ॥

मा पदादिरनुदात्त इत्यस्यापवादः(२)। अवग्रहपूर्व्वो मा, इत्ययं(३) वर्णो नानुस्वारागमं भजते। यथा, पूर्णमासे वै। अर्द्धमासे देवाः। अवग्रहः पूर्व्वो यस्मादसौ 'अवग्रहपूर्व्वः' ॥

## मासिमासुमासोमासामिति च ॥ १२ ॥

'च'कारो निषेधाकर्षकः। 'मासि, मासु, मासः, मासां,' इत्येतेषु ग्रहणेषु न स्यादनुस्वारागमः(४)। एषामपि(५) मा पदादिरिति प्राप्तिः। केचिदत्र प्रथमे मासि पृष्ठानीत्युदाहरन्ति। तदसारं(६)। न पदे द्विस्वरे नित्यमित्यनेनैव सिद्धेः(७)। तस्मादन्यशाखायां

---

१ अनुदात्तत्वनिवर्त्तक इति ग०, इ० मु० च।

२ इत्यस्यायमपवाद इति इ० मु०।

३ इत्येवमिति इ० मु०।

४ एष अनुस्वारागमो न इति ग०।

५ एषाम् इति ग०।

६ तदसाधुरितिइ० मु०।

७ निषेधसिद्धेरिति ग०, इ० मु० च।

बह्वस्वरमुदाहरणमवधारणीयं(१)। दशस्तु माःसूत्तिष्ठन्। षण्मा-
सः(२)। मासां प्रतिष्ठित्यै॥

**ह्वि-पु-जिगा-जिघा-छꣳसिनेऽतꣳसयदाताꣳसीत्-कनी-
या-ज्याया-द्राघीया-रघीया-श्रेया-ह्रसीया-वसीया-भूयाꣳ-
सो-जक्षिवा-जघ्निवा-जिगिवा-जीगिवा-तस्थिवा-दाश्वा-दीदि-
वा-पपिवा-पीपिवा-विद्वा-विविशिवा-शुश्रुवा-सस्ववा॥१३॥**

ह्वि, पु, जिगा, जिघा, छꣳसिने, अतꣳसयत्, आताꣳसीत्, कनीया, ज्याया, द्राघीया, रघीया, श्रेया, ह्रसीया, वसीया, भूयाꣳसः, जक्षिवा, जघ्निवा, जिगिवा, जीगिवा, तस्थिवा, दाश्वा, दीदिवा, पपिवा, पीपिवा, विद्वा, विविशिवा, शुश्रुवा, सस्ववा, इत्येवम्पूर्व्वः सकारपरोऽनुस्वारागमं भजते(३)। यथा, ह्विꣳसीः परमे(४)। चिनुते ह्विꣳसायै। तेन पुꣳस्वतीः। पुꣳसः पुत्रान्। लोकमजिगाꣳसन्। त्वष्टारमजिघाꣳसन्। ब्राह्मणाच्छꣳसिने। ने इति किं। प्रयच्छस्युभे(५)। भगे मुष्टिमतꣳसयत्(६)। यदिति किं। अतसं न शुष्कं। अन्वाꣳतासीत् त्वयि। सीदिति किं(७)। अनुव्रातासस्तव। कनीयाꣳसो देवाः। ज्यायाꣳसो भ्रातरः। द्राघीयाꣳसौ भवतः। अथो रघीयाꣳसः।

१ बह्वस्वरमपरमुदाहरणमवधारणीयमिति इ० मु०। बह्वस्वरपरमुदाहरणमादरणीयमिति ग०।

२ षण्मासो दाक्षिणेन इति इ० मु०।

३ अनुस्वारागमो भवति इति इ० मु०।

४ परमे व्योमन् इति ग०, इ० मु० च।

५ प्रयच्छस्युभे निपासीति ग०, इ० मु० च।

६ गभे मुष्टिमतंसयदिति ग०, इ० मु० च।

७ इदिति किमिति ग०, इ० मु० च।

प्रश्रेयाꣳसं। अथ क्रशीयाꣳसमाक्रमणं। वसीयाꣳसं भागधेयेन। भूयाꣳसोऽन्येभ्यः। विसर्गेण किं[1]। अन्नादो भूयासं। जक्षिवाꣳसः[2]। जघ्निवाꣳसमृद्धः[3]। वाजं जिगिवाꣳसं[4]। जीगिवाꣳसमिति शाखान्तरे[5]। द्युम्ना तस्थिवाꣳसः[6]। दाश्वाꣳसो दाशुषः[7]। शुचये दीदिवाꣳसं[8]। पपिवाꣳसंश्च[9]। पीपिवाꣳसꣳस्सरन्तः[10]। विद्वाꣳसो वै अविद्वाꣳसमक्रम[11]। अथ कारादीतिवचनात्, प्रविविशिवाꣳसमीमहे। शुश्रुवाꣳसः[12]। वाजꣳससवाꣳसः। दाश्वाविविशिवाशुश्रुवेत्यत्रत्रादिषु चैकपद इति प्राप्त्या शकारपरोऽनुस्वारागमः[13] किं न स्यात्। अथ सकारपरा इत्यूष्मविशेषस्य सकारस्यानुवृत्तेरिति वदामः। तर्हि क्रसीया यसीया तस्थिवा ससवा इत्यत्र सकारपर एवागमः किन्न स्यात्। उच्चारणसामर्थ्यादेवेति प्रथमः परिहारः। अथवा आताꣳसीत् कनीयाꣳसमित्यादिषु[14] सर्व्वत्र

---

१ सविसर्गेण किमिति ग०।

२ जक्षिवांसः पपिवांस इति ग०, ह० मु० च।

३ हत्वं जघ्निवांसं स्तघोभि इति ग०, ह० मु० च।

४ वाजजिगिवांस इति ग०। वाजं जिगिवांस इति ह० मु०।

५ जीगिवांसः स्यामेति शाखान्तर इति ग०।

६ तस्थिवांसो जनानामिति ह० मु०।

७ दाशुषः सुतमिति ह० मु०।

८ शुचयो दीदिवांसमिति ग०, ह० मु० च।

९ पपिवांसश्च विश्वे इति ग०, ह० मु० च।

१० पीपिवांसः सरस्वत इति ग०, ह० मु० च।

११ विद्वांसो वै पुरा होतार इति ह० मु०।

१२ यच्छुश्रुवांस इति ग०, ह० मु० च।

१३ प्राप्त्या शपरोऽनुस्वारागम इति ग०।

१४ कनीयाज्यायेत्यादिषु इति ग०, ह० मु० च।

दीर्घानन्तरमेवानुस्वारमिति च स्थानसाहचर्य्यादत्रापि(१) न स्यादनुस्वारस्य ह्रस्वानन्तरं(२) स्थानमित्यपरः परिहारः ॥

## आकारेकारोकाराः सिषिपराः पदान्तयोः ॥ १४ ॥

सिषिपरा अकारेकारोकारास्तयोः सिषोः पदान्तयोः सतोरनुस्वारागमं भजन्ते। यथा, वयाꣳसि पक्वगन्धेन। तमाꣳसि गूहतां(३)। दध्यहवीꣳषि। ज्योतीꣳषि कुरुते। अग्न आयूꣳषि। अवभृथयजूꣳषि(४)। पदान्तयोरिति किं। तस्माद्दासिष्ठः(५)। मनोविषो मनसा। आकारेकारोकारा इति दीर्घेण किं। यथा, नसि युक्ते(६)। ज्योतिस्त्वा ज्योतिषि। आयुषि दुरोणे। सिषीत्यत्र इकारेण किं। प्रजास्वेव प्रजातासु। ओषधीषु तनूषु बद्धम् ॥

## विकृतेऽपि ॥ १५ ॥

'अपि'शब्दान्वादिष्टे, सिषोरिकारे विकृतेऽपि यकारमापन्ने(७) भवत्यनुस्वारागमः। यथा, छन्दाꣳस्युपदधाति। हवीꣳष्यासादयेत्। तपूꣳष्यग्ने जिह्वा ॥

## अनाकारो ह्रस्वꣳसाङ्क्रात्यस्य ॥ १६ ॥

आकारादन्यः, 'अनाकारः' ईकार ऊकारश्चेत्यर्थः। तयोरेव

---

१ अनुस्वार इति साहचर्य्यादत्रापीति ग०।
२ ह्रस्वान्तरमिति ग०।
३ गूहतामजुष्टा इति इ० मु०।
४ अवभृथयजूꣳषि जुहोतीति ग०, इ० मु० च।
५ वासिष्ठो ब्रह्मा इति इ० मु०।
६ नसि युक्त आधीयते इति इ० मु०।
७ यकारमापन्नेऽपि इति ग०, इ० मु० च।

प्रकृतत्वात् साᳫंकृत्यस्य मते ईकार ऊकारश्च ह्रस्वमापद्यते। हवीᳫंषि भवन्ति। समिष्ट यजूᳫंषि जुहोति। अनाकार इति किं। वयाᳫंसि। नेदं सूत्रमिष्टं॥

## न पदे द्विस्वरे नित्यं॥ १७॥

'द्विस्वरे पदे' वर्त्तमानाः(१) आकारेकारोकाराः पदान्ताः सिषिपरा(२) नानुस्वारागमं नित्यं भजन्ते। यथा, स्तुतो यासि(३)। यासि दूतः। 'नित्य'शब्दः प्राप्त्यन्तरप्रतिषेधार्थः। विधतः पासि नुत्मना। स्वशोहेतिप्राप्तिः। प्रथमे मासि पृच्छानि(४)। मा पदादिति(५) प्राप्तिः। द्वौ स्वरौ यस्मिन् विद्येते तद्‌द्विस्वरं, तस्मिन्॥

## ऋञ्जीषि-जिगासि-जिघास्यजासि-यजासि-ददासि-दधासिवर्त्तयासि च॥ १८॥

'च'कारो निषेधाकर्षकः। ऋञ्जीषिप्रभृतिषु ग्रहणेषु नानुस्वारागमः स्यात्। अकारेकारोकारा इति प्राप्तिः। बहुस्वरत्वादेषु पूर्व्वसूत्रनिषेधान्निषिध्यति(६) अतायमारम्भः। यथा, तेनर्जीषि(७) अच्छाजिगासि। जिघासीति शाखान्तरे। आत्मजासि गर्भधं। हविषा यजास्यग्ने बृहत्। याभिर्ददासि दाशुषे। दधासि दाशुषे कवे। अश्वमावर्त्तयासि नः॥

---

१ द्विस्वरे वर्त्तमाने इति क०।

२ पदान्तसिषिपरा इति इ० मु०।

३ स्तुतो यासि वशां अनु इति इ० मु०।

४ पृच्छामि इति ग०।

५ मा पदादिरितीति ग०, इ० मु० च।

६ पूर्वसूत्रनिषेधान्ननिषिध्यतीति ग०। पूर्वसूत्रनिषेधो न सिध्यतीति इ० मु०।

७ तेनर्जीषि सर्वाणि इति इ० मु०।

**दꣳसनाभ्यो-दꣳसोभिर्दꣳसं-वृषदꣳशो-दꣳशुका-दꣳष्ट्राभ्यां परः ॥ १९ ॥**

'दꣳसनाभ्यः' इत्यादिषु ग्रहणेषु 'परः' एवानुस्वारागमो भवति। यथा, वैश्वानरस्य दꣳसनाभ्यः। सजोषावश्विना दꣳसोभिः। भिरिति किम्। ऊतीरिशादसः([१])। पुरुदꣳसꣳ सनिम्। गोवृषदꣳशस्ते([२])। पशून् दꣳशुकाः([३])। दꣳष्ट्राभ्यां मलिम्लून्। दꣳसेत्येतावतैवालम्, किमखिलपाठेन([४])। कुर्वतो ममोपदसदित्यादौ([५]) मा भूदिति। पर इति किं। वृषदꣳश इत्यत्र स्थानद्वयेऽपि स्वादिषु चैकपद इति प्राप्तौ सत्यां पूर्वत्र मा भूदिति। ननु ग्रहणसामर्थ्यादेवानुस्वारागमः([६]) पूर्वत्र न भवति। यथा, ऋसोधावसोयेत्यादौ ग्रहणसामर्थ्यादुपपादितं। नष दोषः। स्वादिषु चैकपद इत्यत्र जषसामान्यमुक्तं। अथ मकारपरा इत्यत्र तु तद्विशेष उक्तः। सामान्यविशेषयोर्विशेषो बलीयानिति न्यायः([७])। तथा सति बलवद्बाधनमेव([८]) भूषणं न तु दुर्बलबाधनमिति([९])। तत्रैव ग्रहणसामर्थ्यं समर्थनीयं,

---

१ युष्माकोतीरिशादस इति ग०, इ० मु० च।

२ वृषदꣳशस्ते धातुरिति इ० मु०। वृषदंशस्ते धातुरिति ग०।

३ पशुः दंशुकाः स्युरिति ग०। पशून् दंशुकाः स्युर्द्विपूचीनम् इति इ० मु०।

४ किमखिलपदपाठेनेति ग०, इ० मु० च।

५ कुर्वतो मे मोपदसत् इति इ० मु०, ग० च।

६ अनुस्वार इति इ०, मु०, ग० च।

७ बलवानिति न्याय इति ग०, इ० मु० च।

८ बलवता बलवद्बाधनमेवेति ग०।

९ न तु दुर्लभबाधनमिति इति ग०।

नत्वत दुर्बले स्थाने(१)। तथाहि(२) अधिकः पुरुषोऽधिकं विरोधिनमेव बाधते, भूषणत्वात्, न तु कदाचिदल्पमिति(३) परशब्द(४) उपपद्यते ॥

**मꣳस्ये-मꣳसतै-यꣳसद्यꣳसन्वꣳसते-वꣳसगः ॥ २० ॥**

'मꣳस्ये' इत्यादिषु स्यादनुस्वारागमः(५)। यथा, पशूनाभि मꣳस्ये(६)। शूरमꣳसतै भद्रा इन्द्रस्य(७)। शोचिषा यꣳसद्विश्वं न्यत्रिणं। इषवः शर्म्म यꣳसन्(८)। अग्निर्नो वꣳसते रयिं। तिग्मशृङ्गो न वꣳसगः। मꣳस, यꣳस, वꣳस, इत्येतावतैवालं, किमुत्तरपाठेन(९)। उत्तमस्यावद्यति। यस्य भूयाꣳसः(१०)। श्रद्य वसु वसति। इत्यादौ मा भूदिति ॥

**उन्न वꣳशं ॥ २१ ॥**

'उत् न' इत्येवम्पूर्वे 'वꣳशम्' इत्यस्यानुसारागमः(११)। उद्वꣳशमिव येमिरे। प्राचीनवꣳशं करोति। एवम्पूर्व इति किं। भवति वशं वा एष चरति(१२) ॥

---

१ दुर्बलस्थाने इति ग०, इ० मु० च।

२ तथापीति इ० मु०।

३ कदाचिदप्यल्पमिति इति ग०। कदाचिदल्पबलमिति इति इ० मु०।

४ स्वच परशब्दप्रयोग इति ग०। परशब्दप्रयोग इति इ० मु०।

५ एषु अनुस्वारागम इति ग०।

६ पशूनाभि मंस्य इति इति ग०, इ० मु० च।

७ अनु नौ शर मंसते भद्रा इन्द्रस्य रातय इति इ० मु०।

८ शोचिषा इषव शर्म यंसन् इति इ० मु०।

९ किमखिलपदपाठेनेति ग०, इ० मु० च।

१० भूयांसो यज्ञक्रातव इति इ० मु०।

११ वंशमित्यस्मिन् पदे स्यादनुस्वारागम इति ग०, इ० मु० च।

१२ ब्रह्मवर्चस्य एव भवति वशं वा एष चरति इति इ० मु०।

## अक्रꣳस्त-क्रꣳस्यते-रꣳस्यते-भ्रꣳशते ॥ २२ ॥

एतेषु[1] स्यादनुस्वारागमः । यां वाज्यक्रꣳस्त[2] । उत्क्रꣳ स्यते स्वाहा । उपरꣳस्यते स्वाहा । नास्माद्राष्ट्रं भ्रꣳशते ॥

## रꣳह्यै च ॥ २३ ॥

'रꣳह्यै' इत्यस्मिन् ग्रहणे स्यादनुस्वारागमः । पूष्णो रꣳह्यै । 'च'कारस्य व्यतिहारेणान्वयादुत्तरसूत्रे[3] प्रयोजनमुच्यते ॥

## ऐकार उख्यस्य नितान्तः ॥ २४ ॥

'रꣳह्यै' इति ग्रहणे[4] पूर्वसूत्रस्थचकारसमर्पितः 'ऐकारः', 'नितान्तः', भवति, 'उख्यस्य,' मते[5] । 'नितान्तः' तीव्रतरप्रयत्न इत्यर्थः[6] । नैतन्मतमिष्टं ॥

## विरिंत्रि सङ्ख्यासु ॥ २५ ॥

'वि,रि,त्रि,' इत्येवम्पूर्वं ऊष्मपरोऽनुस्वारागमः स्यात्, एभिर्यदि 'सङ्ख्या', उच्यते, 'असु' सुशब्दं वर्जयित्वा । सु इति सप्तमी विभक्तिरुक्ता । यथा, अःकारः प्रथमाविभक्त्युपलक्षणं । विꣳशत्यै[7] स्वाहा । यद्विꣳशतिर्द्वे[8] । चत्वारिꣳशते स्वाहा । त्रिꣳशते

---

१ अक्रंस्तेत्यादिषु इति ग०, इ० मु० च ।

२ यां वाक्रंस्त इति ग० ।

३ व्यतिहारेणान्वय उत्तरसूत्रे इति इ० मु० । प्रतिहारेणान्वय उत्तरसूत्रे इति ग० ।

४ रंह्या इत्यस्मिन् ग्रहणे इति ग०, इ० मु० च ।

५ मतम् इति ग० ।

६ तीव्रप्रयत्न इति ग० ।

७ विट्शत्यै इति क० ।

८ यद्विंशतिर्द्वे तेन विराजौ इति ग०, इ० मु० च ।

स्वाहा। त्रिꣳशच्चयस्व। त्रिग्रहणं विस्पष्टार्थं। यतो विरिसङ्ख्यास्वित्येतावदेवास्तु(१)। यथा वा घोषपूर्व इत्यत्र वकारो विस्पष्टार्थः। सङ्ख्येति किं। विशे जनाय। स रिषः पातु(२)। त्रिष्टुभैवास्मै। अस्विति किं। त्रिष्वारोचने दिवः॥

**शिꣳसुमारः-शिꣳषत्सꣳस्वा-सꣳस्वा-सꣳसृष्ट-सꣳस्कृत्य-सꣳस्कृत-सꣳशित-सꣳशिता-किꣳशिल किꣳशिला॥२६॥**

'शिꣳशुमारः' इत्यादिग्रहणेषु स्यादनुस्वारागमः। सिन्धोः शिꣳशुमारः(३)। किन्तत उच्छिषꣳतीति(४)। उभयतः सꣳस्वायि कुर्यात्(५)। सꣳस्रावभागा स्थ(६)। सꣳसृष्टजित्(७)। शरीरमेव सꣳस्कृत्य(८)। तन्नः सꣳस्कृतं। ब्रह्म सꣳशितो ह्येष(९)। शरव्ये ब्रह्मसꣳशिता। किꣳशिल वन्यया ते। परकिꣳशिलग्रहणं पदैकदेशतया बहुपादानार्थं। किꣳशिलस्तुर्यः(१०)। नमः किꣳशिलाय च(११)। ननु सꣳसृष्टेत्यत्र षकारपरोऽनुस्वारागमः किं न स्यात्। मैवं। अत्र सूत्रे सर्व्वत्र पदादिवर्णानन्तरमेवानुस्वार-

---

१ विरिसङ्ख्यास्वित्येतावतैवालम् इति ग०, इ० मु० च।

२ पातु नक्तमिति ग०, इ० मु० च।

३ शिंशुमारो हिमवत इति इ० मु०।

४ उच्छिषतीति यदधिरण्येष्टका इति इ० मु०।

५ कुर्यादवदायाभिरिति इ० मु०।

६ संस्रवभागा स्थेति ग०।

७ संसृष्टजित् सोमपा इति ग०।

८ संस्कृत्याभ्यारोहतीति इति इ० मु०।

९ ह्येष एवहन् इति इ० मु०। ह्येषां स्वादुपंसद इति ग०।

१० चतुर्थो वन्य इति इ० मु०।

११ किं शिलाय च चयणाय च इति इ० मु० ग० च।

दर्शनात्। तत्साहचर्य्यादत्रापि तथैव विज्ञेयं, न वैपरीत्ये कारणमस्ति॥

## सिटहृ हकारपरः॥ २७॥

'सि, ट, ट,' इत्येवम्पूर्व्वो 'हकारपरः,' स्यादनुस्वारागमः। यथा, सिꣳहो वयः। शततर्हाꣳस्तृꣳहन्ति। दृꣳह त्र मा ह्वाः। एवम्पूर्व्व इति किं। सपत्नसाहो स्वाहा। अनतिदाह्वायोवाच। ऋकारेणैवालं, किं तकारदकाराभ्यां। ग्रहाणामसमर्त्थ्यौ। एवम्पर इति किं। सिषासन्तोः। तृष्वोमनु। नक्त' दृशे दीप्यते। हकारः परो यस्मादसौ, 'हकारपरः'॥

## मꣳहिष्ठस्य च॥ २८॥

'मꣳहिष्ठस्य' इत्यस्मिन् ग्रहणे 'च'काराकृष्टहकारोऽनुस्वारागमो भवति(१)। यथा, मꣳहिष्ठस्य प्रभृतास्य। 'च'कारः किमर्थः। अत्रैव ग्रहणे ससकारपरो मा भूदिति॥

## आदिरह्वꣳतिरꣳहोऽꣳहारꣳहोमुगत्यꣳहा-अꣳहसोऽꣳहसाꣳशमꣳशुभिरꣳशभुवाꣳस्वꣳशूत्रꣳशवोऽꣳशुरꣳशुमꣳशूनꣳशुनाꣳशोरꣳशायोपाꣳस्वꣳशौ॥ २९॥

अवग्रहः,(२)अꣳहतिः, अꣳहः, अꣳहो, अꣳहोमुक्, अꣳहाः, अꣳहसः, अꣳहसा, अꣳशं, अꣳशुभिः,अꣳशभुवा,अꣳशु,अꣳशू,

१ चकाराकृष्टहकारपरोऽनुस्वारागमो भवतीति ग०, इ० मु० च। चकाराकृष्टहकारपरानुस्वारागमः स्यादिति ग०।

२ इ० मु० पुस्तके ग, चिह्नितपुस्तके च अवग्रहः, इति पाठो नास्ति।

अꣳशवः, अꣳशुः, मꣳशु, अꣳशून्, अꣳशुना, अꣳशोः, अꣳशाय, उपाꣳशु, अꣳशौ, एतेष्वादिरनुस्वारादिकं भजते(१)। यथा, परिद्वेषसो अꣳहतिः। अꣳहोमुचं वृषभं(२)। सूत्रे संहितायामोत्वविधनात्(३)। अहर्देवानामित्यादौ न स्यादयं विधिः। किन्तु यस्मिन् विसर्ज्जनीयो रेफं नापद्यते, तस्यैवोपादानं। अꣳहोभिद्या। अꣳहोमुग्भ्यां(४)। नन्वयं चैकवन्धः, रेफप्राप्तस्यायं(५) विधिः, विहितानुस्वारस्यैव रेफनिषेधतेति, नैषदोषः(६)। सिद्धस्यैवानुस्वारस्य स्याद्बाध्यता नतु विधिरितिदिक्पालः(७)। ऋतपाव्वात्यꣳहाः। अतीतिकिं। षड़हा भवन्ति। तेनो मुञ्च तमꣳहसः। अꣳहसा वा एष गृहीतः। अꣳहेत्येतावता सिद्धे कुतः सकलपदपाठः(८)। स रसमह वसन्तायेत्यत्रादि निषेधार्थः(९)। परिश्यामोꣳशं(१०)। षड्भिरꣳशुभिः पवयति। त्वया अꣳशभुवा सोमं। भुवेति किं। अꣳशीत्येतावता(११)। ग्रहणे

---

१ अनुस्वारागमो भवतीति ग०, इ० मु० च।

२ वृषभं यज्ञियानामिति ग०।

३ संहितायामोत्वस्याम्नानादयं विधिरिति क०।

४ अंहोमुग्भ्यां द्विकपाल इति ग०। इ० मु० च।

५ चैकबन्धो रेफप्राप्तस्यायं विधिरिति ग०।

६ निषेध इति नायं दोष इति ग०, इ० मु० च।

७ अनुस्वारस्य बोधनं नतु विधिरिति इ० मु०। शुद्धस्यैवानुस्वारस्य बोधनान्नतु विधिरिति ग०।

८ सिद्धे सकलपाठः किमर्थ इति। इ० मु०।

९ वसन्तायेत्यत्र निषेधार्थं इति इ० मु०। वसन्तायेतिनिषेधार्थ इति ग०।

१० परिपश्यामोशं मेति ग०, इ० मु० च।

११ एतावत इति ग०।

तथाविधपदसद्भावादꣳशमित्यत्र न स्यात्[१]। तेनाꣳशुमत् षड्भिरꣳशुभिः। अनुकारादितिवचनात् जनꣳशु कुर्व्वन्तः, इत्यप्युदाहरणं। कृष्ण ह्येतावꣳशू,[२]। प्राणा वा अꣳशवः। अꣳशुरꣳशुस्ते। यमादित्या अꣳशु[३] अꣳशूनपगृह्णाति। अꣳ-शुना ते अꣳशुः। यो वा अꣳशोरायतनं[४]। अꣳशाय स्वाहा भगाय। उपाꣳशू सवनोपाꣳशु सवनं[५]। तमुपाꣳशुमवस्था-पयन्[६]। अꣳश्वित्येतावति गृहीत इतरेषां परिग्रहणं[७] स्यात्। तथाविधपदसद्भावात्। अथोभयं गृह्यते पदमेकदेशस्य किꣳ शिलवत्। तथा सति पदैकदेशेषु पशुं पशुपते अद्येत्यादिषु प्राप्नुयात्, अनुस्वारागमः[८]। तच्चानिष्टं। आदिरिति किं सर्व्वेषु स्थानेषु मा भूदिति। यथा, अꣳहस इत्यादि॥

**अवग्रह उदात्तोऽꣳसेऽꣳसायाꣳसाभ्यामꣳसाविति॥ ३०॥**

‘अवग्रहः,’ आदिरित्यर्थः। यदि पदादिरुदात्तः स्यात् तर्हि ‘अꣳसे अꣳसाय, अꣳसाभ्यां, अꣳसौ’, इत्येतेषु स्यादनुस्वारा-गमः। ‘इति’शब्दः स्वरूपवाची। दक्षिणꣳस उपदधाति। शित्यꣳसामाय स्वाहा। अꣳसाभ्यां स्वाहा। उत्तरेꣳसावेव प्रति-दधाति। आदिरुदात्त इति किं। असावब्रवोच् चित्रविहिता॥

---

१ अप्यकारादिति ग०, इ० मु० च।
२ ह्यणोह्येतावंशू इति ग०।
३ अꣳशुमाप्याययन्तीति इ० मु०।
४ आयतनं वेदेति ग०, इ मु च।
५ यदुपांशु सवनमिति ग०,इ०मु०च।
६ तमुपांशौ समस्थापयन्निति ग०।
७ इतरेषामपरिग्रहः स्यादिति इति ग०, इ० मु० च।
८ प्राप्नुयादनुस्वार इति म०, इ० मु० च।

नासावा नासावा ॥ ३१ ॥

आद्युदात्ते(१) सत्यस्मिन् ग्रहणे न खलु स्यादनुस्वारः(२)। ब्रूयादसाविहेत्येवं ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे षोड़शोऽध्यायः ॥ * ॥

---

१ आद्युदात्तत्वे इति ग०।

२ सत्यप्यसावेत्यस्मिन् ग्रहणे न खलु स्यादनुस्वारागम इति इ०, मु० च।

## अथ सप्तदशोऽध्यायः ।

तीव्रतरमानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः ॥ १ ॥

'अनुस्वारश्च उत्तमाश्च अनुस्वारोत्तमाः', तेषु, 'तीव्रतरं', भवति, 'आनुनासिक्यम्', इति 'शैत्यायनः' नाम मुनिर्मन्यते। तीव्रादधिकः, 'तीव्रतरः'(१)। अनुनासिकानां भावः, 'आनुनासिक्यं'(२)। नासिकाविवरणादानुनासिक्यमित्यस्य विधेः प्रयत्नदार्ढ्यमुपदिश्यते। यथा, अग्नीꣳरप्सुषदः। (३)यङ्कामङ्कामयते। वञ्चते परिवञ्चते स्नायूनां। मणिना रूपाणीन्द्रेण। एतेष्विति किं। रुक्ममुपदधाति। तिग्ममायुधं। सुश्लोकान्३ सुमङ्गलान्३ ॥

समꣳ सर्व्वत्रेति कौहलीपुत्रः ॥ २ ॥

'सर्वत्र' आनुनासिक्यवर्णेषु(४), तीव्रतरत्वं समानमिति(५) 'कौहलीपुत्रः', मन्यते। सꣳरराणः। संयत्ताः। न्यङ्ङग्निः(६)। उपहृतान्३ हो इत्याह। इत्यादि ॥

---

१ तीव्रादधिकं तीव्रतरमिति ग०, इ० मु० च।

२ अनुनासिक एवानुनासिक्यमिति ग०। अनुनासिकताऽनुनासिक्यमिति इ०मु०।

३ तांस्ते दधामि, मर्त्यान् आविवेश, इति इ० मु० पुस्तकेऽधिकः पाठः।

४ अनुनासिकवर्णेषु इति इ० मु०।

५ सममिति इति ग०, इ० मु० च।

६ न्यङ्ङग्निश्चेतव्य इति इ० मु०।

## अनुस्वारेऽण्विति भारद्वाजः ॥ ३ ॥

'अणु' सूक्ष्मतमं आनुनासिक्यम्, 'अनुस्वारे', स्यादिति 'भारद्वाजः', मन्यते। यथा, तनुवा जयत्वꣳ सत्वा। अनुस्वारादन्यत्र शैत्यायनविधिः, उत्तमेषु तीव्रतरत्वं, यमादिषु तीव्रमात्रमिति ॥

## नकारस्य रेफोष्मयकारभावाल् लुप्ते च मलोपाच्चोत्तरमुत्तरन्तीव्रतरमिति स्थविरः कौण्डिन्यः ॥ ४ ॥

'नकारस्य' 'रेफोष्मयकारभावात्', 'च'काराकृष्टयकारे 'लुप्ते' सति 'मलोपाच्च', 'उत्तरमुत्तरम्', आनुनासिक्यं आनुपूर्व्येण 'तीव्रतरं' स्यादिति 'स्थविरः कौण्डिन्यः' मन्यते। यथा, त्रीꣳ रेकादशानित्यत्र(१) आनुनासिक्यं संयोगमात्रत्वात्। शुक्लाꣳश्च कृष्णाꣳश्चेत्यत्र तु संश्लिष्टं। महाꣳइन्द्र इत्यत्र तीव्रतरम्(२)। सꣳशितमित्यत्र तीव्रततममित्यानुपूर्व्येण विज्ञेयं(३)। अत्र(४) शैत्यायनविधिः ॥

## व्यञ्जनकालश्च स्वरस्यात्राधिकः ॥ ५ ॥

'च'कारः स्थविरकौण्डिन्यमन्वादिशति। 'अत्र'अनुस्वारविधाने, सानुनासिक'स्वरस्य' 'व्यञ्जनकालः' ह्रस्वार्द्धकालः 'अधिकः' स्यादिति स्थविरः कौण्डिन्यो मन्यते। युञ्जाथाꣳ रासभं युव-

---

१ त्रीन् एकादशान् इहेत्यत्रेति ह० मु०।

२ तीव्रतर इति क०।

३ आनुपूर्व्यं विज्ञेयमिति ग०, ह० मु० च।

४ अतोन्यत्रेति ह० म०।

मित्यादि । अत्रैव स्वरस्येतिकिं, स्वरादिषूत्तमेषु उत्तमभावेनैवमधिककालं मा भूदिति[१] । स्वोग्निः[२] ॥

## स्वारविक्रमयोर्दृढप्रयत्नतरः पौष्करसादेः ॥ ६ ॥

स्वारे विक्रमे च प्रयोगः 'पौष्करसादेः' मते 'दृढ़प्रयत्नतरः'[३] भवति । 'स्वारः' स्वरित इत्यर्थः । 'विक्रमः' नाम अनुदात्तविशेषः । यथा, योऽस्य स्वोग्निः[४] । आस्ये हविः प्रियं । स्वारविक्रमयोरिति किं । गां वाव तौ तत्[५] । दृढ़ः प्रयत्नो यस्मादसौ दृढ़प्रयत्नः[६], अतिशयेन दृढ़प्रयत्नः 'दृढ़प्रयत्नतरः' ॥

## प्रयत्नविशेषात् सर्ववर्णानामिति शैत्यायनः ॥ ७ ॥

'सर्व्ववर्णानां' प्रयोगस्योचित'प्रयत्नविशेषात्'[७] दृढप्रयत्नतरो भवतीति 'शैत्यायनः' मन्यते । यथा, इषे त्वेत्यादि । एतानि[८] सप्त सूत्राणीष्टानि ॥

**नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदीरयेत् ।**
**पयःपूर्णमिवामत्रं हरन्धीरो यथामति ॥**

---

१ स्वादिषूत्तमेषूत्तमत्वभावे चैतदधिककालविधानं मा भूत् इति द० मु०।ग०, चिह्निते 'स्वादिषूत्तमेषूत्तमाभावे' इति विशेषः ।

२ स्वोग्निः इति पाठः क० एव ।

३ दृढप्रयत्न इति क० ।

४ स्वोग्निस्तमपि इति ग०, द० मु० च ।

५ तौ तात्पार्यं अवदतामिति द०मु० ।

६ दृढः प्रयत्नो यस्य स इति ग० । दृढः प्रयत्नो यस्यासौ दृढप्रयत्न इति द० मु० ।

७ प्रयोगः स्वोचितप्रयत्नविशेषादिति द०मु० ।

८ नैतानीति ग०, द० मु० च ।

**इत्यात्रेय आत्रेयः(१) ॥ ८ ॥**

'अतिव्यक्तम्' अतिस्पष्टम्, 'अव्यक्तम्', अस्पष्टञ्च, यथा, 'न' भवति, 'एवं', 'वर्णान्', 'उदिङ्गयेत्' उच्चारयेदित्यर्थः। 'पयः-पूर्णमिवामत्रं' चीरपरिपूरितं भाजनं, 'हरन्निव', 'यथामति' मतिमनतिक्रम्य वर्त्तमानः, धीरः अध्येता, भावयेत्(२) 'इत्यात्रेयः', मन्यते ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे सप्तदशोऽध्यायः ॥ * ॥

---

१ सूत्रग्रन्थे पद्यरचनाम्नायो न दृश्यते। अत्रान्यत्र तु सूत्राष्टकं पद्येनोपन्यस्तं। अपितु आत्रयो भाष्यकृद्वत्वा कथमर्वाचीनस्य तस्य सूत्रे प्रामाण्यं गृहीतं, तस्मात पद्यमयसूत्राणि न सूत्रकारकृतानीत्याशङ्क्यते। यथा भाष्यकारः स्वीयमङ्गलाचरण श्लोकयो र्व्याख्यं। स्वयं कृतवान्, तथापि स्वोद्धृत प्रमाण पद्यानां व्याख्यानं कृतं नतु सूत्रत्वेव परिगणित मित्यनुमीयते।

२ पराधिकारो धीरो भवेदिति क०।

## अथाष्टादशोऽध्यायः ।

**ओकारन्तु प्रणव एकेऽर्द्धतृतीयमात्रं ब्रुवते ॥ १ ॥**

'प्रणवे' 'ओकारम्', 'अर्धतृतीयमात्रम्', 'एके ब्रुवते' एके आचार्याः, अर्धतृतीयमात्रमाहुः, इत्यर्थः । अर्द्धं तृतीयं ययोस्ते अर्द्धतृतीये, अर्द्धतृतीयमात्रे यस्यासौ अर्द्धतृतीयमात्रः । यथा, समुद्रो बन्धुः, ओम् । ओं येभ्यश्चैनत् प्राहुः(१) । ओं इषे त्वा । ओं ब्रह्म सन्धत्तं । कालनिर्णयेप्येवं निर्णीतं(२),

स्वाध्यायारम्भशेषस्य प्रणवस्य स्वरस्य च ।
अध्यायस्यानुवाकस्या,-न्ते स्यादर्द्धतृतीयता(३) ॥

'तु'शब्दस्य प्रयोजनमुच्यते । सन्ध्यक्षराणां वेदश्च प्रणवश्चान्तरा(४) तथा, इति कालनिर्णये । सन्ध्यक्षराणां ह्रस्वा न सन्तीति पाणिनीये अपि । ओकारमात्रस्य दीर्घकालो निरूपितः । इह तु प्रणवस्थत्वविशेषणादसौ(५) कालो निषिद्ध्यते । वेदस्य प्रणवे तु स्यात् समकालद्विमात्रता इति प्रणवविशेषे कालविशेषकालः प्रत्येकं प्रत्येतव्यः(६) ॥

---

१ येभ्यश्चैनत् प्राहुः, ओमिति ग०, इ०, मु० च ।

२ एवं वर्णितमिति इ० मु० ।

३ स्वाध्यायस्यानुवाकस्यान्ते इति क० ।

४ वेदे च प्रणवो मान्तरा इति ग० । वेदप्रणवान्तरा इति इ० मु० ।

५ प्रणवस्थत्वविशेषेणासौ इ० मु० ।

६ प्रणवविशेषे कालविशेषः प्रत्येतव्य इति ग,०इ० मु० च ।

**उदात्तानुदात्तस्वरितानां कस्मिंश्चिदिति शैत्यायनः ॥ २॥**

तेषां मध्ये(१) 'कस्मिंश्चित्' स्वरे, प्रणवः प्रयोक्तव्य इति 'शैत्यायनः' मन्यते(२)। यथा, ओम्।

**धृतप्रचयः कौण्डिन्यस्य ॥ ३ ॥**

तस्य मते(३) प्रणवो 'धृतप्रचयः' भवति। चतुर्थः स्वरो 'धृत-प्रचयः' इति कथ्यते। ननु प्रचयपूर्वश्च कौण्डिण्यस्येति वत् प्रचय इत्येतावतैवालं, किं धृतशब्देन। मैवं। पदद्वयेनाप्यनेन नाम-धेयमेवाभिधीयते। यथा(४), अर्थभेदाभावेपि प्रयोगभेदोस्तीति प्रयोगाचार्य्यः प्रकटयति(५)। यथा, भीमसेनो भीमः। सत्य-भामा सत्या(६)। पिधानमपिधानं। दीपः प्रदीपः। इत्यादि ॥

**मध्यमेन स वाक्प्रयोगः ॥ ४ ॥**

प्रयुज्यत इति 'प्रयोगः'। 'मध्यमेन' उच्चनीचसमाहारविचक्षणेन(७) प्रयत्नेन प्रणवः, यत्र क्वच न वाचस्थाने 'प्रयोगः' भवति 'सः' इति कौण्डिण्याभिमतः पूर्वोक्तो गृह्यते। वाचि प्रयोगो 'वाक्प्रयोगः' ॥

**स्वरितः प्लाक्षिप्लाक्षायणयोः ॥ ५ ॥**

'प्लाक्षिप्लाक्षायणयोः' पक्षे(८) 'स्वरितः' भवति। नैतत्सूत्र-चतुष्टयमिष्टं ॥

---

१ उदात्तानुदात्तस्वरितानां मध्ये इति ग०, इ० मु० च।

२ ब्रूते इति ग०, इ० मु० च।

३ कौण्डिन्यस्य मते इति ग०, इ० मु० च।

४ तथाहीति ग०, इ० मु० च।

५ प्रयोगान्तरचातुर्थमाचार्यः प्रकटयतीति ग०। प्रयोगाचार्यमाचार्यः प्रकटयति इति इ० मु०।

६ भामा सत्यभामा इति ग० इ० मु० च।

७ समाहारविलक्षणेनेति ग०।

८ तयोर्मध्ये इति क०।

**उदात्तो वाल्मीकेः ॥ ६ ॥**

तस्य मते(१) प्रणवः 'उदात्तः', भवति ॥

**यथाप्रयोगं वा सर्वेषां यथाप्रयोगं वा सर्वेषां ॥ ७ ॥**

'यथाप्रायोग'शब्देनोदात्तोऽभिधीयत इति माहिषेयपक्षः । प्रणवं(२) 'यथाप्रयोगम्', 'वा' कुर्य्यादिति 'सर्वेषां' ऋषीणां मतं । वररुचिपक्षस्तु वक्ष्यते, अध्येष्यमाणं 'यथाप्रयोगं' यथाविधस्वरं तथाविधेन वा(३) स्वरेण प्रयोक्तव्य इति 'सर्वेषां', मतमिति । यथा, इषे त्वेत्यनेनाध्येष्यमाणानुदात्तेन प्रणवेप्यनुदात्तः(४) । आप उन्दन्त्वित्युदात्तेनोदात्तः व्यृद्धमिति स्वरिते स्वरितः(५) । नेदं सूत्रमिष्टं ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे अष्टादशोऽध्यायः ॥ * ॥

---

१ वाल्मीकेर्मते इति इ० मु० । वाल्मीकिमते इति ग० ।

२ प्रणवे इति ग०, इ० मु० च ।

३ तथाविधेनेति ग० ।

४ इषे त्वेत्यध्येष्यमाणमनुदात्तं तत्र प्रणवोप्यनुदात्त इति ग० । इषे त्वेत्यनेनाध्येष्यमाणेनानुदात्तेन प्रणवोप्यनुदात्त इति इ० मु० ।

५ आपउदन्तु इत्यत्र उदात्ते उदात्तः स्वरिते स्वरित इति ग० । आपउदन्त इति उदात्तेनोदात्तः, व्यृद्धमिति स्वरितेन स्वरित इति इ० मु० ।

## अथ एकोनविंशोऽध्यायः।

**स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वान्यतरतो वोदात्तस्वरितयोः स विक्रमः ॥ १ ॥**

'यत्र' स्थले, 'स्वरितयोर्मध्ये' उदात्तयोः मध्ये, 'उदात्तयोर्व्वान्यतरतो वा' इति[१] स्वरितोदात्तयोर्वेत्यर्थः। 'उदात्तस्वरितयोः' मध्ये[२] 'नीचं' यदक्षरं, 'स विक्रमः', भवति। स्वरितयोर्मध्ये यथा, योस्य स्वोग्निः[३]। उदात्तयोर्यथा, वोढवे। स्वरितोदात्तयोर्यथा, धन्व नागाः। उदात्तस्वरितयोर्यथा, तस्य क्व सुवर्गो लोकः। विक्रमसञ्ज्ञायाः प्रयोजनं। स्वारविक्रमयोर्दृढप्रयत्नतर इति॥

**प्रचयपूर्व्वस्य कौण्डिन्यस्य ॥ २ ॥**

'च'शब्दो[४] विक्रम इति ज्ञापयति। तस्य मते उदात्तः स्वरः स्वरितपरो वा[५] 'प्रचयपूर्व्वस्य',[६] विक्रमो विज्ञेयः। उदात्तपरो यथा, पर्य्यवदता या[७]। स्वरितपरो यथा, उपरिष्टाल्लक्ष्मा यज्या। प्रचयः पूर्व्वो यस्मादसौ, 'प्रचयपूर्वः' ॥

---

१ यत्र स्वरितयोर्मध्ये उदात्तयोर्वा अन्यतरतो वेति इति इ० मु०।

२ उदात्तस्वरितयोर्वा मध्ये इति ग०,इ० मु० च०।

३ योस्य स्वोग्निस्तमपीति ग०। यस्य स्वोग्निस्तमपीति इ० मु०।

४ चकार इति ग०, इ० मु० च।

५ कौण्डिन्यस्य मते उदात्तपरः स्वरितपरो वेति इति ग०, इ० मु० च।

६ प्रचयपूर्वस्य नीच इति ग०।

७ पर्यवदतां या यज्ञे दीयत इतिइ०मु०।

## द्वियम एके द्वियमपरे ता अणुमात्राः ॥ ३ ॥

'यम'शब्दः स्वरितपर्य्यायः। द्वौ यमौ यत्र देशे नैरन्तर्य्येण वर्त्तेते, स 'द्वियमः,' तस्मिन्। द्वियमः परो यस्मादसौ 'द्वियमपरः,' तस्मिंश्च द्वियमे सति(१) याः स्वरित प्रकृतयः 'ताः' सर्व्वा अन्ततः 'अणुमात्राः', अभिहता(२) भवन्तीति 'एके' मन्यन्ते। द्वियमा यथा, तन्व्यान्यं(३)। द्वियमपरो यथा, सो३पो३भ्य आम्रियत। अन्तत इति कथं प्रतीयते, पदान्ते च तथा(४) कम्पा, अन्ततो निहताणुका इति वचनादिति ब्रूमः। निहतन्तु स्वरितयोर्मध्ये यत्र नीचतममेतत्सान्निध्यात्(५) लभ्यते। शिक्षा चैवं वक्ष्यति,

> नित्योभिनिहतश्चैव चैप्रः प्रश्लिष्ट एव च।
>
> एते स्वराः प्रकम्पन्ते यत्रोच्चस्वरितो यथेति(६)।
>
> शेषस्योदात्तता वा स्यात् स्वारता वा व्यवस्थया॥ इति।

व्यवस्थाशब्देनानेन द्विविधः कम्प उक्तः। संहितायां स्वरित उक्तः कम्पः(७) इतरे वेदभागे(८) उदात्तकम्प इति कम्पाः प्रसिद्धाः तेष्वेव लक्षणं(९), नतु कम्पविधायकं। अन्यथा योपाम्पुष्पमित्यादौ कम्पः प्रसज्येत। नेदं सूत्रमिष्टं॥

---

१ विद्वयमे सति इति क०।

२ अन्ततोणुमात्राः संहिता इति ग०। अन्ततोणुमात्रानिहता इति इ० मु०।

३ तन्योन्यस्मै इति इ० मु०।

४ यथेति ग०।

५ नोचमित्येतत्सान्निध्यादिति ग०,इ० मु० च।

६ यत्रोच्चस्वरितोदया इति ग०,इ०मु०च।

७ संहितायां स्वरितकम्प इति ग०, इ० मु० च।

८ इतरवेदभागेति ग०,इ० मु० च।

९ तत्वेनत्र लक्षणमिति ग०, इ०मु० च।

## तस्यामेव प्रकृतौ ॥ ४ ॥

द्वियमस्थले पूर्व्वस्यामेव 'तस्यां' स्वरितप्रकृतावणुमात्रेपि(१) निहतत्वं भवति। द्वियमपरे तु स्थले पूर्वयोरेव प्रकृत्योरणुमात्रया निहतत्वं भवति। नतु ताः सर्व्वा अणुकार्य्यभाज इत्येवकारो बोधयति। एवमेव कौहलीय आह(२), द्वयोः पूर्व्वाऽणुमात्रिकस्त्रिषु(३) पूर्व्वावणुमात्रिकावुत्तरः प्रकृत्येति ॥

## न पूर्वशास्त्रे न पूर्व्वशास्त्रे ॥ ५ ॥

'पूर्व्वशास्त्रं' नाम विक्रमविधिः, तस्मिन्नेतदणुकार्य्यं न भवति। एवं वा सूत्रार्थः, पूर्व्वशास्त्रे अध्यायप्रथमसूत्रे या क्रमसञ्ज्ञा उक्ता, सा कम्पविधावत्र न भवति। विक्रमस्य दृढ़प्रयत्नत्वात्, कम्पस्य तदभावात्।

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकोनविंशोऽध्यायः ॥ * ॥

---

१ पूर्व्वस्यामपरस्यां स्वरितप्रकृतावणुमात्रयापीति ग०।

२ कौहलीय आह इति ग०,ह० मु० च।

३ अणुमात्रिकस्त्रिष चेति ग०।

४ अणुमात्रिकादिति ग०।

## अथ विंशोऽध्यायः ।

### इवर्णोकारयोयवकारभावे चैप्र उदात्तयोः ॥ १ ॥

उदात्तयोः 'इवर्णोकारयोः' यथोपदेशं 'यवकारभावे' सति स्वरितो यो विहितः स 'चैप्रः' इति सञ्ज्ञायते । यथा, व्यैवैनेन(१)। क्वधीस्वास्मान् । उदात्तयोरिति किं । वस्व्यसि(२) । अन्वेनं माता(३) ॥

### सयकारवकारं त्वक्षरं यत् स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् ॥ २ ॥

'सयकारं वा सवकारं' वा 'अक्षरं' स्वर इत्यर्थः(४) । 'स्थिते पदे' पदकाल इत्यर्थः । 'यत्र' स्थले, 'स्वर्य्यते' 'अनुदात्तपूर्वे' 'अपूर्वे' वा पूर्व्वाभावे सति, 'नित्य एव इति' सर्वत्र 'जानीयात्' । सर्वत्रेति संहितापदजटास्वित्यर्थः । यथा, वायव्यं । कन्येव तुन्ना । ततो विल्वः । न्यञ्चं चिनुयात् । न्यञ्चं(५) । क्व जगती च । क्वास्यास्य क्वा, क्वास्येति जटायां । तुशब्दो नित्यादावुच्चोदयविषये नोदत्तस्वरितपर(६) इति निषेधं निवारयति । ननु नित्यः

---

१ व्यैवैनेनेति ग०, इ० मु० च ।

२ वस्व्यसि इति ग० । वास्व्यसि इति इ० मु० ।

३ अन्वेनं माता मन्यताम् इति ग० ।

४ सयकारं वा सवाकारं अक्षरः स्वरूप इत्यर्थ इति क० ।

५ अन्वञ्चमिति ग० ।

६ उच्चारकविषयान्नोदात्तस्वरितपर इति क० ।

कथमेतन्निषेधविषयः। उदात्तात्परोनुदात्त इति लक्षणासम्भवात्। अत्रोच्यते[१], वर्णविभागवेलायामुदात्तपूर्वत्वमस्ति, समाहारः स्वरितः इत्युच्चपूर्वत्वात्[२], स्वरितस्येति निषेधविषयत्वं। अनुदात्तश्चासौ पूर्वश्च अनुदात्तपूर्वः, तस्मिन्। पूर्वाभावः, अपूर्वः, तस्मिन्। शून्ये सपूर्वत्वात् पूर्वत्वविशेषद्वयस्य[३] अन्यथा वैयर्थ्यात्। तस्मात्तत्र नित्यत्वस्वरितत्वमेव[४] न सञ्ज्ञान्तरमिति विज्ञेयं॥

**अपि चेन्नानापदस्थमुदात्तमथ चेत् साꣳहितेन स्वर्यते स प्रातिहतः॥ ३॥**

'अपि'शब्दः पूर्वत्वमात्राकर्षकः। 'अथ'शब्दो नित्यसञ्ज्ञाव्यवच्छेदकः, नानापदस्थोदात्तपूर्वत्वाधिकारको वा। 'नानापदस्थं', अक्षरमुदात्तपूर्वं 'चेत्' परतः। नीचं 'सांहितेन' विधिना 'स्वर्यते', 'चेत्' 'स प्रातिहतः' वेदितव्यः[५]। यथा,[६], इषे त्वा। तन्ते दुश्चक्षाः[७]। सांहितेनेति किं। यन्नाऽक्षम्। नानापदस्थमिति किं। तया देवतया॥

---

१ उच्यते इति ग०।

२ समाहारे स्वरितः, स्वरित इत्युच्यते पूर्वत्वात् इति ग०।

३ शून्ये तु सर्वत्रापूर्वत्वविशेषद्वयस्येति ग०। शून्ये तु सर्वत्र पूर्वत्वात् पूर्वत्वविशेषणद्वयस्येति इ० मु०।

४ तस्मान्नित्यत्वमेवेति ग०।

५ प्रातिहारोत्र वेदितव्य इति इ० मु०। प्रातिहतो ज्ञेय इति ग०।

६ मा ते व्यथ्यां। यास्त्वा हृदाकीर्णा इति इ० मु० पुस्तकेऽधिकः पाठः।

७ तां ते दुश्चक्षा इति इ० मु०।

## तस्मादकारलोपेऽभिनिहतः ॥ ४ ॥

'तस्मात्' नानापदस्थोदात्तात्, परभूतानुदात्तस्य अकारस्य[१] 'लोपे' सति यः स्वरितः सः 'अभिनिहतः' वेदितव्यः[२]। यथा, सोऽब्रवीत्। तेऽब्रुवन्। तस्मादिति किं। भ्राजोसि देवानां ॥

## ऊभावे प्रश्लिष्टः ॥ ५ ॥

'ऊभावे' यत्र स्वर्य्यते, सः 'प्रश्लिष्टः' वेदितव्यः[३]। सून्नीयमिव। सूद्गाता। मा सूत्तिष्ठन्। दिवूपदधाति ॥

## पदविवृत्त्यां पादविवृत्तः ॥ ६ ॥

पदयोर्विवृत्तिः पदविवृत्तिः, तस्यां, यः स्वर्य्यते सः 'पादविवृत्तः' भवति[४]। यथा, ता अस्मात्,[५]। स इधानः[६], य उपसदः। 'विवृत्तिः' व्यक्तिरित्यर्थः[७]। पदयोरिति किं। प्रउगमुक्थं ॥

## उदात्तपूर्व्वस्तैरोव्यञ्जनः ॥ ७ ॥

उदात्तपूर्व्वाधिकारे सति पुनरत्र तत्कथनादेकपदस्थोदात्तविशेषोभिगम्यते[८]। तस्मादेकपदस्थोदात्तपूर्व्वो यः स्वरितः, स

---

१ परभूतानुदात्ताकारस्येति इ०मु०।

२ सोभिनिहतो ज्ञेय इति ग०।

३ प्रश्लिष्टो ज्ञेय इति ग०।

४ पादविवृत्तो वेदितव्य इति इ०मु०। पादविवृत्तो ज्ञेय इति ग०।

५ अस्मात् सृष्टा इति इ० मु०,ग० च।

६ सा इधाना इति इ० मु०।

७ विवृत्तिर्व्यक्तिरित्यर्थ इति क०।

८ एकपदस्थत्वविशेषो गम्यते इति क०। एकपदस्थोदात्तविशेषोवगम्यते इति इ० मु०।

तैरोव्यञ्जनो वेदितव्यः[१]। यथा, गुष्मन्त्यस्य। वसव्यसि। स इन्द्रो मन्यत[२]। तदश्वोऽभवत्। प्रउगं। तं त्वष्टाधत्त[३]॥

## इति स्वरनामधेयानि ॥ ८ ॥

'इति' एतानि, स्वरितनामानि, व्याख्यातानि[४]। यथा, अभ्यस्थात्। अध्वर्युँरिति क्षैप्र.[५]। वायव्यं[६]॥ क्वास्येति नित्य :। स ते लोकः[७]। यत्त्वा क्रुद्ध[८] इति प्रातिहतः। सोऽब्रवीदित्यभिनिहतः॥ सुन्वतेति प्रश्लिष्टः। त एतामिति[९] पादवृत्तः। मम न मेति[१०] तैरोव्यञ्जनः।

## क्षैप्रनित्ययोर्दृढतरः॥ ९ ॥

'क्षैप्रे' नित्ये च प्रयत्नो 'दृढ़तरः' कार्य्यः॥

## अभिनिहत च ॥१० ॥

अन्वाचये वर्त्तमानः 'च'कारो दृढ़मात्रं[११] बोधयति॥

---

१ तैरोव्यञ्जनो ज्ञेय इति ग०।
२ स इन्द्रो मन्यतेति इ० मु०।
३ तां त्वष्टाधत्तेति इ० मु०।
४ स्वरितनामान्युक्तानीति ग०। सप्त-स्वरितनामधेयानि व्याख्यातानीति इ० मु०।
५ अध्वर्यावेरिति क्षैप्र इति इ० मु०।
६ वायव्यामिति इ० मु०।
७ स ते लोक इति इ० मु०।
८ यत्त्व क्रुद्ध इति ग०।
९ ता एतामिति इति इ० मु०।
१० मामनाम इति इ० मु०।
११ दृढमोत्वमिति क०।

'अभिनिहते' प्रयत्नो दृढः स्यात्। ननु दृढतर इति पृथक् सूत्रारम्भः(१) प्रतीयते॥

प्रश्लिष्टप्रातिहतयोर्मृदुतरः॥ ११ ॥

'प्रश्लिष्टे प्रातिहते' च प्रयत्नो 'मृदुतरः' कार्य्यः ।

तैरोव्यञ्जनपादवृत्तयोरल्पतरोऽल्पतरः॥ १२ ॥

'तैरोव्यञ्जने पादवृत्ते' च प्रयत्नः 'अल्पतरः' स्यात् यद्यप्यल्पमृदुदृढभावस्तत्रोक्तः(२) तथापि दीपवद्दिगुणत्ववदिति शिक्षानुरोधात् कोमलशिरस्कत्वं विज्ञेयं(३)॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे विंशोऽध्यायः॥ * ॥

---

१ पृथक्सूत्रारम्भादपि इति ग०, इ० मु० च।

२ यद्यल्पदुदृढभावं तत्रोक्त इति क०। यद्यप्यल्पमृदुभावस्तत्र तत्रोक्त इति ग०।

३ सवर्ण विज्ञ यमिति इ० मु०, ग० च।

# अथ एकविंशोऽध्यायः ॥

## व्यञ्जनꣳस्वराङ्गं ॥ १ ॥

व्यञ्जनं स्वराङ्गं भवति। श्वासो नादोऽङ्गमेव चेति विज्ञेयत्वेन विधानादयमारम्भः। ननु कूपो यूप इत्यादौ[1] व्यञ्जनमेवार्थविशेषनिबोधकमिति[2] स्वरो व्यञ्जनाङ्गं किन्न स्यात्। उच्यते, व्यञ्जनं केवलमवस्थातुं न शक्नोति, किन्तु सापेक्षं, स्वरस्तु, निरपेक्षः। सापेक्षनिरपेक्षयोर्निरपेक्षमेव विशिष्टमाचक्षते[3] प्रेक्षावन्तः। विशिष्टं प्रत्यङ्गत्वमविशिष्टस्यैव। किञ्च स्वरवैशिष्ट्यबोधकमन्यदपि विद्यते,

दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः।
दुर्बलं व्यञ्जनं तद्वद्धरेत[4] बलवान् स्वरः[5]।
स्वरास्तु ब्राह्मणा ज्ञेया इत्यादि।
उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः[6]।

---

१ कूपो यूपो धूप इत्यादाविति ग०।

२ बोधकमिति इति ग०,इ०मु० च।

३ निरपेक्षमेव बलवदित्याचक्षते इति ग०।

४ हरते इति ग०, इ० मु० च।

५ किञ्च, शिक्षाव्याकरणे। यः स्वयं राजते तन्तु स्वरमाह पतञ्जलिः। उपरिस्थायिनातेन व्यङ्ग्य व्यञ्जनमुच्यते। इति इ० मु० पुस्तकेऽधिकः पाठः।

६ स्वरितश्चेति त्रयः स्वरा इति क०।

ह्रस्वो दीर्घः प्लुतश्चैव[१] कालतो नियमा अपि[२] ॥ इति।

स्वराणामेवोदात्तादयो धर्म्माः, व्यञ्जनं तु[३]तदङ्गतया व्यञ्जनमर्द्धमात्रं। स्वरस्य मात्राकालः तयोः सन्धिरर्द्धमात्रा[४] इत्येवं दीर्घकालः प्रसक्तः। तत्प्रतिषेधकार्थ्यं[५] व्यञ्जनंस्वराङ्गमित्युक्तम्। स्वरसंसृष्टस्य व्यञ्जनस्य स्वरकाल एव कालो द्रुतवृत्तौ[६] न तु स्वरस्यैव सर्व्वत्रेत्यर्थः[७]। द्रुतवृत्ताविति किं। ह्रस्वार्द्धकालं व्यञ्जनमिति व्यर्थं स्यादिति ब्रूमः। यथा क्षीरोदकसम्पर्के क्षीरस्यैवोपलब्धिर्नोदकस्य, तथा स्वरव्यञ्जनसम्पर्के स्वरस्यैवोपलब्धेर्वैशिष्ट्यं ॥

## तत् परस्वरं ॥ २॥

स्वरप्रधानतया केवलमवस्थातुमसहमानं[८] व्यञ्जनं कदा पूर्व्वस्याङ्गतां[९] कदा परस्याङ्गमिति सन्देहे व्यवस्थापयति। 'तत्' अङ्गभूतं व्यञ्जनं 'परस्वरं' भजते। यथा, इमानिव लोकानुपधाय। परश्चासौ स्वरश्च परस्वरः, तं 'परस्वरं' ॥

## अवसितं पूर्व्वस्य ॥ ३ ॥

'अवसितं' पदान्तवर्त्ति व्यञ्जनं, 'पूर्व्वस्य' स्वरस्य, अङ्गं स्यात्। यथा, जक्। वषट्। हविः ॥

---

१ प्लुत इति ग०, इ० मु० च।

२ अपि इति ग०, इ० मु० च।

३ व्यञ्जनानान्तु इति ग०।

४ सन्धिरद्धार्द्धमात्र इति ग०, इ० मु० च।

५ प्रतिषेधार्थमिति ग०, इ० मु० च।

६ द्रुतद्रुतौ इति क०।

७ सर्वस्येत्यर्थ इति ग०।

८ असहमानमिति क०।

९ पूर्वस्याङ्गमिति ग०, इ० मु० च।

## संयोगादि ॥ ४ ॥

तयोर्बह्वनां(१)वा 'संयोगो भवति, तस्य संयोगस्य 'आदि' व्यञ्जनं पूर्वस्याङ्गं भवति। यथा, यज्ञान्वगादिग्नत्। अप्स्वन्तः(२)। परसूत्रे चकारः पूर्वस्वराङ्गं भवति(३) ॥

## परेण चासꣳहितम् ॥ ५ ॥

'परेण' स्वरेण, 'असꣳहितं' असंयुक्तं च व्यञ्जनं पूर्वस्वराङ्गं भवति। यथा, तत् सवितुः। ननु तर्हि पूर्व्वसूत्रमनर्थकं। संयोगादिभूतस्यापि व्यञ्जनस्यानेनैव पूर्व्वस्वराङ्गत्वसिद्धेः। मैवं मंस्थाः। मर्य्यश्रीः, अर्व्वासि, इत्र यवकारयो रेफात् परं चेति द्वित्वे कृते प्रथमयवकारयोः परेण चासꣳहितमित्यनेन पूर्व्वस्वराङ्गत्वं प्राप्तं। रेफस्य नान्तस्थापरमसवर्णमित्यनेन परस्वराङ्गत्वं प्राप्तं। तत्राशक्यं। तथोच्चारणासम्भवात्। अन्यतरबाधे कर्त्तव्ये सति किं बाध्यमिति सन्देहः। तत्र नियामकत्वेन(४) संयोगादिसूत्रमुपतिष्ठते ॥

## अनुस्वारः स्वरभक्तिश्च ॥ ६ ॥

'च'कारः समुच्चयकथनद्वारा पूर्व्वस्वराङ्गत्वाकर्षकः(५)। 'अनुस्वारः' पूर्व्वस्वरं भजते। यथा, अꣳशुना ते। 'स्वरभक्तिश्च'

---

१ द्वयोर्व्यञ्जनामिति ग०, इ० मु० च।

२ अप्स्वग्ने इति क०।

३ अत्र सूत्रे चकारः पूर्वस्वराङ्गबोधक इत्यवापितत्त्लभ्यते इति ग०।

४ निश्चयत्वेनेति ग०।

५ पूर्वस्वराङ्गत्वाकर्षक इति ग०।

पूर्व्वस्वरं भजते। यथा, गार्हपत्यः। विधौ समाने सूत्रस्यास्य पृथक्करणं क्वचित् स्वरभक्तेः पराङ्गत्वमापादयितुं(१)। तथाहि,

स्वराङ्गत्वात् परां भक्तिं प्रचयत्वं नयेद् बुधः।
ऋतस्य धूर्षदं चेति स्वतन्त्रा भक्तिरुच्यते॥

## नान्तस्थापरमसवर्णं॥ ७॥

'न'कारः पूर्व्वस्वराङ्गत्वव्यावर्त्तकः। 'अन्तस्थापरं' व्यञ्जनं तस्या अन्तस्थाया 'असवर्णं' विलक्षणं पूर्व्वस्वराङ्गं(२) न भवति। अर्थात् परस्वरान्त इति विज्ञेयं(३)। स्वरं विना स्थातुमशक्यत्वात्(४) यथा, अध्यवसायद्भिः। मधुमिश्रेण। अश्लोणया। इषे त्वा। अन्तस्था परा यस्मात्तत्, 'अन्तस्थापरं'। असवर्णमितिकिं। परिचाय्यं चिन्वीत॥

## नासिक्याः॥ ८॥

'नासिक्या' यमाः स्वरं(५) भजन्ते। यथा, रुक्ममुपदधाति। राज्ञे सूकरः(६)॥

## स्पर्शश्चोष्मपर उष्मा चेत् परस्य॥ ९॥

पूर्व्वः 'च'कारो नासिक्या इत्यनेन समुच्चयवाचकः। उत्तरस्तु परस्वराङ्गाकर्षकः(७)। 'ऊष्मपरस्पर्शश्च' परस्वराङ्गं भवति। असौ

---

१ स्वराङ्गमापादयिष्यदिति ग०।

२ पूर्व्वस्वराङ्गव्यञ्जनमिति क०।

३ परस्वराङ्गं तदिति वेदितव्यमिति ग०, इ० मु० च।

४ स्वतःस्थातुमशक्यत्वादिति ग०, इ० मु० च।

५ नासिक्यायामाः परस्वरमिति इ०मु०। यमाः नासिक्या यमाःपरस्वराङ्गमिति ग०।

६ इन्द्राय राज्ञे इति ग०।

७ परस्वराङ्गत्वाकर्षक इति ग०,इ० मु०च।

'जश्मपरश्चेत्' परस्वराङ्गं चेदित्यर्थः। षट्त् सम्पद्यन्ते। वषट्त् स्वाहा। जश्मपरश्चेदिति किं। अत्तया व्याघारयति। जश्मा परो यस्मात् असौ, 'जश्मपरः'॥

**स्वरितात् सꣳहितायामनुदात्तानां प्रचय उदात्त-श्रुतिः॥ १०॥**

'स्वरितात्' परेषां 'अनुदात्तानां' अनुदात्तयोरनुदात्तस्य वा 'संहितायां' 'प्रचयः'नाम धर्मो भवति। यथा, अग्ने दुभ्र गह्य किꣳ शिल वन्यया ते। अनुदात्तानामिति किं। ते अग्नये प्रवते(१)। संहितायामिति किं। अग्ने दुभ्र गह्य किꣳशिल वन्य। उदात्तस्य श्रुतिरिव श्रुतिर्यस्य असौ, 'उदात्तश्रुतिः'। इति प्रचयस्वरूपनिरूपणं। अतो न पुनरुक्तिशङ्का॥

**नोदात्तस्वरितपरः॥ ११॥**

'उदात्तस्वरितपरः', वा अनुदात्त स्वरितो न भवति, प्रचयो न भवति(२)। यथा, तया देवतया(३)। तदाहुः क्षजगती(४)। उदात्तश्च स्वरितश्च उदात्तस्वरितौ, एतौ परौ(५) यस्मात् सः, तथोक्तः॥

---

१ अग्नये प्रवते इति ग०, इ० मु० च।

२ उदात्तपरः स्वरितपरो वा अनुदात्त-प्रचयो न भवति इति ग०, इ० मु० च।

३ तया देवाः सुताम्। इति इ० मु०।

तया देवा इति ग०।

४ क्षजागती इति इ०मु०। क्षजगती चेति ग०।

५ तौ पराविति इ० मु०, ग० च।

## स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान्नासिक्या ॥ १२ ॥

'उत्तमपरात् अनुत्तमात् स्पर्शात्' 'आनुपूर्व्यात्'(१) यथाक्रमं 'नासिक्याः' आगमा भवन्ति। प्रथमस्पर्शात् प्रथमनासिक्यः। द्वितीयाद् द्वितीयः। एवमन्यत्रापि। यथा, तं प्रत्नथा। विद्मा ते अग्ने। दारुणि दध्मसि। इत्यादि। स्पर्शादिति किं। कल्माषो भवति। अनुत्तमादिति किं। सुम्नाय सुम्निनी। उत्तमपरादिति किं। जमाः सब्दः सगरः(२) ॥

## तान्यमानेके ॥ १३ ॥

'तान्' नासिक्यान्, 'एके' शाखिनः 'यमान्' ब्रुवते। उक्ता-न्येवोदाहरणानि ॥

## हकारान्नणमपरान्नासिक्यं ॥ १४ ॥

'हकारात्' इति कर्म्मणि ल्यब्लोपे पञ्चमी। तस्मात् 'नणं' अपरं हकारमारुह्य नासिक्यं भवति। सानुनासिको(३) हकारः स्यादित्यर्थः। अह्नां केतुः। अपराह्णे। ब्रह्मवादिनः॥

## रेफोष्मसंयोगे रेफस्वरभक्तिः ॥ १५ ॥

'रेफस्योष्मणश्च(४) 'संयोगे' सति 'रेफस्वरभक्तिः' इति जानीयात्। स्वरस्य भक्तिः, 'स्वरभक्तिः'। योऽस्य रेफस्य समानकरणः स्वरः(५) तद्भक्तिः स्यात्। ऋकारश्चास्य जिह्वाग्रकरणत्वे-

१ स्पृष्टाच्चानुपूर्व्यादिति ग०। स्पर्शा-द्यव त आनुपूर्व्यामिति क०।

२ सब्दः सगरः सुमेक इति इ० मु०।

३ सानुनासिक्य इति ग०, इ० मु० च।

४ रेफस्य चोष्मणश्चेति ग०, इ० मु० च।

५ समानस्वर इति ग०, इ० मु० च।

न(१) रश्रुत्या च समानधर्म्मः। 'भक्तिः' अवयवः, एकादेश इति यावत्। एतदुक्तं भवति, ऋकारावयवो भवतीत्यर्थः। सूत्रेणानेन स्वरभक्तिरेव विहिता। स्वरभक्तिस्वरूपन्तु विस्पष्टं व्याचष्टे वररुचिः। ऋकारादिरणुमात्रा रेफोर्द्धमात्रा, मध्ये शेषा स्वरभक्तिः, इति(२)। अस्यार्थः(३)।

इन्द्रियाविषयो(४) योसावणुरित्युच्यते बुधैः।
चतुर्भिरणुभिर्मात्रा परिमाणमिति स्मृतं॥

मात्रिकस्य ऋकारस्यादिरणुमात्रा स्वरभागः, मध्ये रेफः, अर्द्धमात्रा, शेषा अणुमात्रा(५) स्वरभागः। एतदृकारस्वरूपं(६)। अत्र रेफोर्द्धमात्रे भज्यमाने सति तौ भागौ पूर्व्वोत्तराणुसहितौ प्रत्येकं स्वरभक्तिनामधेयं भजेते। सा च स्वरभक्तिरर्द्धमात्रा कुत्र वा(७) स्वरभक्तिरित्याशङ्क्य शिक्षाकारैरुक्तं,

शषसेषु स्वरोदयां हकारे व्यञ्जनोदयां(८)।
शषसेषु च विवृतां(९) हकारे संवृतां विदुः॥ इति।

यो वै श्रद्धामित्यादौ सूत्रोक्तस्वराभावात्(१०) न स्वरभक्तिः। स्वरभक्त्यन्तरमपि शिक्षायामुक्तं,

करेणुः कर्विणी चैव हरिणी हारिणीति च।

---

१ जिह्वाग्रहणत्वे नेति क०।

२ ऋकारादिरणुमात्रा मध्ये शेषा स्वरभक्तिरिति इति ग०। क,चिह्नितपुस्तके "स्वरभक्तिरर्द्धमात्रे ति। इति विशेषः। समानमन्यत्।

३ अस्यायमर्थ इति इ० मु०।

४ इन्द्रिय विषयइति क०, इ० मु० च।

५ शेषोप्यणुमात्रा इति इ० मु०। शेषा शेषोप्यणुमात्र इति ग०।

६ एतदकारस्वयमिति क०।

७ कुत्रे ति ग०।

८ हकारव्यञ्जनोदयामिति क०।

९ शषसेषु त विवृतामिति ग०, इ० मु० च।

१० सूत्रोक्तक्रमाभावादिति ग० इ०, मु० च।

हंसपदेति विज्ञेया पञ्चैताः स्वरभक्तयः ॥
करेणू रेफयोर्योगे(१) कर्विणी लहकारयोः।
हरिणी रशसानाञ्च(२) हारितां लशकारयोः ॥
या तु हंसपदा नाम सा तु रेफषकारयोः।
एवं पञ्चविधां भक्तिमुच्चरेत्स्वर्गकामुकः ॥

यथा, करेणुः, वर्हिः। कर्विणी, माल्हा। हरिणी, दर्शपूर्णमासौ। वर्षं, हारिता। सहस्रवल्सा, हंसपदा। वर्षाभ्य इत्यादि।

## न क्रमे प्रथमपरे प्रथमपरे ॥ १६ ॥

'क्रम'शब्दो द्वित्वपर्यायः। कथमेतत् प्रकृतिक्रमः(३) क्रम इत्यत्र द्वित्वस्यैव क्रमशब्देनाभिधानात्। अत्रापि स एवार्थ इति निश्चिनुमः। ऊष्मणः क्रमे सति तस्मिन्नूष्मणि प्रथमपरे वा सति न स्वरभक्तिर्भवति। क्रमे यथा दार्श्यं(४), वर्षाभ्यः, वर्षेभिः। एतर्ह्यां(५)। प्रथमपरे यथा, अदर्शंज्योतिः। कार्ष्णी उपानहौ। प्रथमः परो यस्मादसौ 'प्रथमपरः' ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकविंशोऽध्यायः ॥ ० ॥

---

१ रहयोर्विद्यादिति ग०। करेणु प्रहणयोर्विद्यादिति क०।

२ हरिणीरशयोर्योगे इति ग०।

३ प्रकृतिविक्रम इति इ० मु०।

४ दार्श्यं यज्ञमिति इ० मु०।

५ एतर्ह्यं चारूढ इति इ० मु०।

## अथ द्वाविंशोऽध्यायः।

---

### शब्दः प्रकृतिः सर्व्ववर्णानां। १।

'सर्वर्णानां' 'शब्दः' ध्वनिः, 'प्रकृतिः' मूलकारणं भवति। सर्व्वशब्देन(१) स्वरव्यञ्जनात्मको राशिरुच्यते। सर्व्वे च ते वर्णाश्च 'सर्ववर्णाः' तेषां॥

### तस्य रूपान्यत्वे वर्णान्यत्वं॥ २॥

प्रातिश्रुत्कस्थानभेदात् 'तस्य' प्रकृतिभूतस्य, 'रूपान्यत्वे' सति 'वर्णान्यत्वं' स्यात्। यथा, अ इ उ इत्यादि॥

### तत्र शब्दद्रव्याण्युदाहरिष्यामः॥ ३॥

तेषां वर्णानां सर्व्वत्र सङ्घातप्रयोगे सति शास्त्रमित्युच्यते(२)। तस्य शब्द इति पर्य्यायनाम। तत्र तस्मिंश्छास्त्रे यानि द्रव्याणि भवन्ति, तान्युदाहरिष्यामः। यत् कर्म्म येन क्रियते, तत्तस्य, द्रव्य-साधनमिति यावत्। यथा, घटस्य मृदिति। एवं शास्त्रस्य वर्णाः। यानि द्रव्याणि संव्यवहारार्थानि, कर्त्तव्यानि तानि व्याख्यास्यामः। शब्दस्य द्रव्याणि, 'शब्दद्रव्याणि' तानि॥

---

१ वर्णशब्देनेति ग०, इ० मु० च। २ प्रयोगे वा शास्त्रमुच्यते इति ग०, इ० मु० च।

## वर्णकारौ निर्द्देशकौ ॥ ४ ॥

'वर्ण'शब्दः 'कार'शब्दश्च 'निर्द्देशकौ' वाचकौ(१)स्यातां। यथा, अवर्ण-व्यञ्जन-शक्नोति। अथ षकारर्ं सकारविसर्ज्जनीयाविति। वर्णश्च कारश्च 'वर्णकारौ'॥

## चापीत्यन्वादेशकौ ॥ ५ ॥

'च अपि', इत्येतौ 'अन्वादेशकौ' स्यातां। पूर्व्वापि चयान्वादेशक(२) इत्युच्यते। यथा, असद्दामासिञ्चर्ंश्च। इति परोपि॥

## त्वथैवेति विनिवर्त्तकाधिकारकावधारकाः ॥ ६ ॥

'तु, अथ, एव,' इत्येते शब्दा यथाक्रमेण 'विनिवर्त्तकाधिकारकावधारकाः' भवन्ति। यत्र 'तु'शब्दः श्रूयते, तत्र निवृत्तिः। यत्र 'अथ' शब्दः, तत्राधिकारः। यत्र 'एव' शब्दः, तत्रावधारणमिति वेदितव्यं। यथा, एफस्तु रस्य। अथ संहितायामिकप्राणभावे। स्पर्श एवैकेषामाचार्य्याणां। विशेषेण निवर्त्तयतीति, 'विनिवर्त्तकः'। अधिकरोतीति 'अधिकारकः'। अवधारयतीति 'अवधारकः'॥

## वेति वैभाषिकः ॥ ७ ॥

'वा' इत्येष शब्दो वैभाषिको वैकल्पिको भवति। यथा, मुखनासिक्या वा॥

---

१ निर्द्देशकौ निर्द्देशवाचकौ इति ग०, इ० सु० च।

२ पूर्वापिचावन्वादेशक इति क०। पूर्वापिचोन्वादेश इत्युच्यते इति ग०।

**नेति प्रतिषेधकः ॥ ८ ॥**

'न' इति शब्दः 'प्रतिषेधकः' स्यात्(१)। यथा, न पुष्णोग्निरिति॥

**आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य ॥९ ॥**

उच्चैरुदात्त इत्युक्तं, तदर्थमिदमारभ्यते, लोकवद्यादृच्छिकोच्चारणप्रतिषेधार्थं(२)। 'आयामः' गात्राणां दैर्घ्यं। 'दारुण्यं' स्वरस्य कठिनता। 'अणुता' 'खस्य' गलविवरस्य संवृतता। एतानि नामधेयानि(३) शब्दस्य 'उच्चैःकरणानि'(४) शब्दमुच्चैः उदात्तं कुर्व्वन्तीत्यर्थः। उच्चशब्दमुच्चारयता एतत् कर्त्तव्यमिति विधिः। उच्चैः कुर्व्वन्तीति 'उच्चैःकरणानि'॥

**अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकरणानि ॥ १० ॥**

'अन्ववसर्गः' गात्राणां विस्तृतता(५)। 'मार्द्दवं' स्वरस्य स्निग्धता। 'खस्य उरुता' कण्ठस्य स्थूलता, इत्येतानि, साधनानि शब्दस्य नीचैःकारणानि, शब्दं नीचमनुदात्तं कुर्व्वन्तीत्यर्थः। नीचशब्दमुच्चारयता एतत् कर्त्तव्यमिति विधिः। नीचैः कुर्व्वन्तीति 'नीचैःकरणानि'॥

**मन्द्रमध्यमताराणि स्थानानि भवन्ति ॥ ११ ॥**

'मन्द्रं, मध्यमं, तारं', चेत्येतानि स्थानानि भवन्ति। 'मन्द्रं' इति प्रथमं। 'मध्यमं' इति द्वितीयं। 'तारम्' इति तृतीयं।

---

१ नेत्येष शब्दः प्रतिषेधको भवति इति इ० मु०, ग० च।

२ प्रतिषेधायेति ग०।

३ एतानि साधनानि इति ग०, इ० मु० च।

४ उच्चैःकराणि इति ग०।

५ विततता इ ग०, इ० मु० तच।

एषां(१) स्थानानां प्रयोजनमुत्तरत्र वक्ष्यते। एतानि स्थानानि केषामित्यपेक्षायामाह परसूत्रं ॥

**तत्रैकविंशतिर्यमाः ॥ १२ ॥**

तेषु स्थानेषु(२)'एकविंशतिः' 'यमाः'स्वरा भवन्ति। तेषां यमानामुत्तरत्र प्रयोजनं वक्ष्यते ॥

**ऋग्विरामः पदविरामो विवृत्तिविरामः समानपदविवृत्तिविरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्द्धमात्र इत्यानुपूर्व्येण ॥ १३ ॥**

ऋग्विरामादयस्त्रिमात्रादिकाला यथाक्रमं भवन्ति। यथा, उभावाजस्य सातये हुवे वां, इत्यृग्विरामः। इषे, त्वा, ऊर्ज्जे, त्वा, इति पदविरामः। स इधानः, त एनं, ता अस्मान्, इति विवृत्तिविरामः। प्रउगमिति समानपदविवृत्तिविरामः। ऋचि विरामो 'ऋग्विरामः'। पदस्य विरामः 'पदविरामः'। पदद्वयविवृत्तौ विरामः 'विवृत्तिविरामः'। शिक्षायामस्य विशेष उक्तः,

पिपीलिकादीर्घसमे च मध्ये सवर्णता पाकवती पदैक्ये।
दृष्ट्वा च वत्सानुसृजस्त्वसाम्ये त्वथोचि मुख्यस्तु विरामकालः ॥
स्वरोदये त्वनुस्वारो भवेदध्यणुमात्रिकः।
विरामश्च तयोर्मध्ये वैशेषिकाच्च दीर्घयोः ॥
ह्रस्वादिर्वत्सानुसृतिरन्ते वत्सानुसारिणी।

---

१ एतेषामिति ग०, इ० मु० च।          २ तेषु स्थानेषु इति ग०।

पाकवत्युभयह्रस्वा दीर्घोभया(१) पिपीलिका ॥
मात्रिका(२) वत्सानुसृतिस्तथा वत्सानुसारिणी ।
पादोना स्यात् पाकवती पादमात्रा पिपीलिका ॥

समानञ्च तत् पदञ्च 'समानपदं' । एकपदमित्यर्थः । समानपदे विवृत्तिः, तस्यां(३) विरामः, 'समानपदविवृत्तिविरामः' । तिस्रो मात्रा यस्यासौ 'त्रिमात्रः' । द्वे मात्रे यस्यासौ 'द्विमात्रः' । एका मात्रा यस्यासौ 'एकमात्रः' । अर्द्धमात्रा यस्यासौ 'अर्द्धमात्रः' ॥

यद्व्यञ्जनान्तं यदु चापि दीर्घꣳ
संयोगपूर्व्वञ्च तथानुनासिकं ।
एतानि सर्व्वाणि गुरूणि विद्यात् शेषाण्यतोऽन्यानि ततो लघूनि ॥ १४ ॥

'व्यञ्जनान्तं' 'यत्' अक्षरं, । व्यञ्जनमन्ते यस्य तद् 'व्यञ्जनान्तं' । 'यदुचापि दीर्घं' अक्षरं, । 'संयोगपूर्व्वं च' यदक्षरं, संयोगात् पूर्व्वं 'संयोगपूर्व्वं' । 'तथा' 'अनुनासिकं' सानुनासिकं यदक्षरं, उक्तानि 'एतानि'(४) 'सर्व्वाणि' अक्षराणि 'गुरूणि' 'विद्यात्' जानीयात् । यथा, व्यञ्जनान्तं, मातेव पुत्रं । यथा, दीर्घं । ते तेऽधिपतयः । यथा, संयोगपूर्व्वं, अश्मा च मे । यथा, अनुनासिकं, विꣳशत्यै स्वाहा । 'शेषाण्यतोन्यानि' अत एभ्यो गुरुभ्यः शेषाण्यन्यानि अक्षराणि, 'ततः' अनन्तरं, 'लघूनि'

१ उभयदीर्घेति ग० ।
२ मात्रा चेति इ० मु० ।
३ समानपदे विवृत्तिः समानपदवृत्तिः, तस्यामिति ग०, मु० इ० च ।
४ उक्तान्येव इति क० ।

विजानीयात् । अव्यञ्जनान्तंयद्ध्रस्वम् । शेषाणि कानीत्याशङ्क्यो-त्तरश्लोकेन विवृणोति ॥

अव्यञ्जनान्तं यद्ध्रस्वमसंयोगपरं च यत् ।
अननुस्वारसंयुक्तमेतल्लघु निबोधतै-
तल्लघु निबोधत ॥ १५ ॥

'अव्यञ्जनान्तं' 'यत्' अक्षरं, 'यत् च' 'अह्रस्वं,'यत्' च 'संयो-गपरं' यत् 'अनुस्वारसंयुक्तं' 'एतत्' सर्व्वमक्षरं 'लघु' 'निबोधत' जानीध्वं । यथा, मदुदयना इत्यादि(१) । व्यञ्जनमन्ते यस्य तत् व्यञ्जनान्तं, न व्यञ्जनान्तं 'अव्यञ्जनान्तं' । संयोगः परो यस्मात् तत् संयोगपरं, न संयोगपरं 'असंयोगपरं' । अनु-स्वारेण संयुक्तं अनुस्वारसंयुक्तं, न अनुस्वारसंयुक्तम् 'अननु-स्वारसंयुक्तं' ॥

इति त्रिभाष्यरत्ने प्रातिशाख्य-विवरणे द्वाविंशोऽध्यायः ॥ ० ॥

---

१ मदुदयना अमत्रित्यादि इति ग०, मु०, इ०, च ।

# अथ त्रयोविंशोऽध्यायः

## अथ वर्णविशेषोत्पत्तिः ॥ १ ॥

'अथ' इत्ययमधिकारः। वर्णानां 'विशेषोत्पत्तिः' कथ्यते(१), इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः। वर्णानां विशेषो वर्णविशेषः, तस्य उत्पत्तिः, सा तथोक्ता ॥

## अनुप्रदानात् सꣳसर्गात् स्थानात् करणविन्ययात्।
## जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्, इति ॥ २ ॥

अनुप्रदानादिभिः पञ्चभिः करणैर्वर्णानां 'वैशेष्य'(२) जायते। अकारस्य तावत् 'अनुप्रदानं' नादः। 'संसर्गः' कण्ठे। 'स्थानं' हनू। 'करणविन्ययः' ओष्ठौ। 'विन्ययः' नाम विन्यासः। 'परिमाणं' मात्राकालः। एवं सर्व्ववर्णानां बोध्यं(३)। विशेषभावो वैशेष्यं, वर्णानां वैशेष्यं, 'वर्णवैशेष्य' ॥

## वर्णपृक्तः शब्दो वाच उत्पत्तिः ॥ ३ ॥

'पृक्तः' मिश्र इत्यर्थः। 'वर्ण'मिश्रः 'शब्दः' 'वाचः' वाक्यस्य, 'उत्पत्तिः' उपादानकारणं भवति। वर्णपृक्त इति किं। दुन्दुभ्यादिशब्दानां वाक्यत्वं(४)मा भूदिति ॥

---

१ उच्यते इति ग०, इ० मु० च। | ३ बोद्धव्यमिति इ० मु० क० च।
२ वर्णवैशेष्यमिति ग०, इ० म० च। | ४ वाक्यता इति ग०, इ० मु० च।

## सप्त वाच स्थानानि भवन्ति ॥ ४ ॥

'वाचः सप्त स्थानानि भवन्ति'। तानि उत्तरसूत्रे वक्ष्यन्ते(१)। यैर्वाक्यं युज्यते(२) यस्मिंश्च तिष्ठति, तत् स्थानं। तानि यथाक्रममुदाहरिष्यामः ॥

## उपाᳬंशुध्वाननिमदोपब्दिमन्मन्द्रमध्यमताराणि ॥ ५ ॥

'उपांशु' इति प्रथमं वाच स्थानं। 'ध्वानः' इति द्वितीयं। 'निमदः' इति तृतीयं। एवमितराण्यपिनामतः सप्तैतानि स्थानानि जानीयात्। उपरितनं सूत्रमारभ्य प्रत्येकमेषां लक्षणं वक्ष्यते ॥

## करणवदशब्दममनःप्रयोगमुपाᳬंशु ॥ ६ ॥

'करणवत्' प्रयत्नवदित्यर्थः। नास्ति शब्दो ध्वनिरित्यस्मिन्(३) 'अशब्दः' मनसा प्रयोगः, 'मनःप्रयोगः' नास्ति मनःप्रयोगोस्मिन्(४) इति 'अमनःप्रयोगः'। वाचस्थानमीदृशम् 'उपांशु' इत्युपदिश्यते। तत्र करणवदिति तूष्णीम्भावनिवृत्त्यर्थः। शब्दमिति शब्दस्यात्यन्ताल्पतार्थम्। अमनःप्रयोगमित्युदात्तादीनां साङ्कल्पिकप्रतिषेधार्थम्(५) ॥

## अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः ॥ ७ ॥

'अक्षराणि' स्वराः। 'अक्षराणां व्यञ्जनानां च 'अनुपलब्धिः',

---

१ भण्यन्ते इति ग० ।

२ यैर्वाक् प्रयुज्यते इतिग०, इ०मु०च ।

३ ध्वनिरस्मिन् इति इ० मु० ।

४ प्रयोगो यस्मिन्निति इ० मु०, ग० च ।

५ साङ्कल्पिकप्रयोगप्रतिषेधार्थमिति ग०, इ० मु० च ।

'ध्वानः' नाम द्वितीयं वाच स्थानं। उपांशुलक्षणेऽप्यनुपलब्धौ सत्यां पुनर्व्वचनं शब्दोपलब्धिविधानार्थम्। अक्षरव्यञ्जनानां भेदग्रहण-मभिख्यार्थम्(१), अत्यन्तानुपलब्धिरित्यर्थः। (२)अन्ये त्वाहुः, अक्षरव्यञ्जनानां विसर्जनीयादीनामनुपलब्धिरिति॥

**उपलब्धिर्निमदः॥ ८॥**

अक्षरव्यञ्जनानाम् 'उपलब्धिः' 'निमदः' नाम तृतीयं वाच स्थानं(३)॥

**सशब्दमुपब्दिमत्॥ ९॥**

अक्षरव्यञ्जनानां 'सशब्दम्' उपलब्धिः, 'उपब्दिमत्' नाम चतुर्थं वाच स्थानं भवति।

**उरसि मन्द्रं कण्ठे मध्यमꣳ शिरसि तारं॥ १०॥**

यत्र 'उरसि' स्थाने प्रयोग उपलभ्यते, तत् 'मन्द्रं' नाम पञ्चमं वाच स्थानं। यत्र 'कण्ठे' स्थाने प्रयोग उपलभ्यते, तत् 'मध्यमं' नाम षष्ठं वाच स्थानं। यत्र 'शिरसिस्थाने, प्रयोग उपलभ्यते, तत् 'तारं' नाम सप्तमं वाच स्थानं। एतेष्वादितश्चतुर्णां यज्ञादिषु प्रयोगः। मन्द्रं प्रातःसवने प्रयुज्यते(४)। मध्यमं माध्यन्दिने। तारं तृतीये(५)। शिक्षा चैवं वक्ष्यति,

प्रातः पठेन् नित्यमुरस्थितेन स्वरेण शार्दूलरुतोपमेन।

---

१ भेदग्रहणमाभीष्टार्थमिति ग०।

२ शामण्यस्य पञ्चेरारण्यापितृच्यमिति ग, चिह्नितपुस्तकेऽधिकः पाठः।

३ स्थानं भवति इति ग०, इ० मु० च।

४ उपयुज्यते इति ग०, इ० मु० च।

५ तृतीयसवन इति ग०, इ० मु० च।

मध्यन्दिने कण्ठगतेन चैव चक्राह्वसङ्कूजितसन्निभेन ॥
तारन्तु विद्यात् सवने तृतीये शिरोगतं तच्च सदा प्रयोज्यम्।
मयूरहंसान्यभृतः स्वनानां तुल्येन नादेन शिरस्थितेन ॥

## मन्द्रादिषु त्रिषु स्थानेषु सप्तसप्त यमाः ॥ ११ ॥

'त्रिषु मन्द्रादिषु स्थानेषु' एकैकस्मिन् 'सप्त सप्त यमाः', भवन्ति। 'यमाः' स्वरा उदात्तादय इति यावत्। सप्तसप्तेति वीप्सया एकैकस्मिन्निति लभ्यते। के ते यमा इत्याशङ्क्योत्तरसूत्रेणोत्तरमाह ॥

## क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्य्याः ॥ १२ ॥

क्रुष्टश्च प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थश्च मन्द्रश्च अतिस्वार्य्यश्च 'क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रातिस्वार्य्याः, ते तथोक्ताः। एते खलु यमा नाम(१) ॥

## तेषां दीप्तिजोपलब्धिः ॥ १३ ॥

'तेषां' खलु सप्तस्वराणां, 'दीप्तजा'(२) पूर्व्वपूर्व्वोपलब्धिः स्यात्। तत्कथम्। अतिस्वार्य्यदीप्तिजा मन्द्रोपलब्धिः, मन्द्राच्चतुर्थोपलब्धिः। चतुर्थात् तृतीयः, तृतीयात् द्वितीयः, द्वितीयात् प्रथमः, प्रथमात् क्रुष्ट उपलभ्यते ॥

## द्वितीयप्रथमक्रुष्टास्त्रय आह्वारकस्वराः ॥ १४ ॥

द्वितीयादय(३) एते त्रय आह्वारकस्वराः स्युः। एषां तैरेव प्रयोगा वेदितव्याः। आह्वारकाणां स्वरा 'आह्वारकस्वराः' ॥

---

१ क्रुष्टादयो यमा नामेति क०।

२ सप्त यमा नाम उत्तरोत्तरदीप्तिजेति ग०, इ० मु० च।

३ द्वितीयश्च प्रथमश्च क्रुष्टश्च ते तथोक्ता इति ग०, इ० मु० च।

**मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः ॥ १५ ॥**

'मन्द्रादयश्चत्वारो द्वितीयान्ताः' स्वराः मन्द्रचतुर्थतृतीयद्विती-याः, 'तैत्तिरीयकाः' स्युः ॥

**द्वितीयान् मन्द्रस्तैत्तिरीयाणां तृतीयचतुर्थावनन्तरं तच्चतुर्यममित्याचक्षते ॥ १६ ॥**

'तैत्तिरीयाणां' 'द्वितीयात्' खलु 'मन्द्रः' जायते। तदनन्तरं 'तृतीयचतुर्थौ' स्यातां। एतदेव द्वितीयादिस्वरमण्डलं 'चतुर्यम्' इत्याचक्ष्यते। यो द्वितीयः, स उदात्तः, यो मन्द्रः सोनुदात्तः, यौ तृतीयचतुर्थौ तौ स्वरितप्रचयावित्यर्थः। अनेन सूत्रेण पूर्व्वोक्तानामेव(१) चतुर्णां स्वराणां क्रमनियमः क्रियते। चतुःसङ्ख्या तु पूर्व्वसूत्रेणैवोक्ता। तस्मादत्र चतुर्यममित्येतत् सञ्ज्ञाविधिपरमिति प्रतीयते ॥

**तस्मिन् द्वियमान्तरा वृत्तिः ॥ १७ ॥**

द्वौ च तौ यमौ च 'द्वियमौ, तयोः(२) 'अन्तरा वृत्तिः' मध्यवृत्तिः, तस्मिन्ननुदात्ते भवति, स्वरितत्वं प्रचयत्वञ्चानुदात्ते भवतीत्यर्थः। यथा, स नः पर्षत्। पर्ष्यवदतां। केचिदन्यथा वदन्ति(३), तस्मिंश्चतुर्यमे स्वरमण्डले द्वियमान्तरा वृत्तिः, स्वरद्वयस्य मध्ये वर्त्तमानः(४) स्यात्। तथाहि,

> अनुदात्तो हृदि ज्ञेयो मूर्ध्नुदात्त उदाहृतः।
> स्वरितः कर्णमूलीयः सर्व्वाङ्गे प्रचयः स्मृतः।

---

१ पूर्वेषामेवेति ग०, इ० मु० च।
२ द्वियमयोरिति इ० मु०।
३ कथयन्तीति ग०, इ० मु० च।
४ वर्त्तमानमिति ग०, इ० मु० च।

अयमर्थः[१], उदात्तानुदात्तयोर्मध्ये स्वरितप्रचययोरन्तरावृत्तिर्भवति। तथा कौहलीये[२], हस्तविन्याससमयेपि स्वरितप्रचययोरन्तरावृत्तिरुपदिश्यते ।

उदात्त आख्याति वृषोङ्गुलीनां प्रदेशिनी मूलनिविष्टमूर्द्धा ।
उपान्तमध्ये[३] स्वरितं धृतञ्च कनिष्ठिकायामनुदात्तमेव ॥ इति ।

शिक्षावचनमपि चैवं वक्ष्यते[४],

कनिष्ठिकानामिका च मध्यमा च प्रदेशिनी ।
नीचस्वरधृतोदात्तानङ्गुष्ठाग्रेण निर्द्दिशेत् ॥

मुख्यमेव व्याख्यानद्वयमेतत् ।

## तामुपदेक्ष्यामः ॥ १८ ॥

यदेतदाचार्य्यैश्चतुर्यममुक्तं[५] तस्य चतुर्भेदभिन्ना वृत्तिर्नाम 'तामुपदेक्ष्यामः' इत्युच्यते। तामिति तच्छब्देन पूर्व्वोक्तं द्विमात्रमनुकृष्यते[६] ॥

## तच्चतुर्यममित्युक्तं ॥ १९ ॥

'इति' अनेन प्रकारेण, 'चतुर्यममित्युक्तं'। यद्यपि मन्द्रादयो द्वितीयान्ता इत्यादिसूत्रद्वयेन यमचतुष्टयं न सिद्धं[७] तथाप्युपसंहारमिषेण मतान्तरनिवृत्त्यर्थमिममर्थं दृढ़यति। यतः कारणादेवमन्ये मन्यन्ते, स्वरत्रयमात्रं ।

---

१ अस्यायमर्थ इति इ० मु० ।
२ कौहलेयेति ग०, इ० मु० च ।
३ अन्ते च मध्ये इति ग० ।
४ वक्ष्यति इति ग० ।
५ चतुर्थममित्युक्तमिति ग०,इ०मु० च ।
६ पूर्वोक्तवृत्तिमात्रमनुकृष्यते इति ग०, इ० मु० च ।
७ यमचतुष्टयञ्चेति ग० ।

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥

क्रमविक्रमसम्पन्नामद्रुतामविलम्बिताम् ।
नीचोच्चस्वारसम्पन्नां वदेद्धृतवतीꣳसमां
वदेद्धृतवतीꣳ समामिति ॥ २० ॥

तैत्तित्तिरीयाद्वारकमतनिरूपकोयं श्लोकः । 'क्रमविक्रमाभ्यां सम्पन्नां'(१) 'क्रमः' नाम द्वित्वं, 'विक्रमः' तु स्वरितयोर्मध्ये यत्र नोचम्, इत्युक्तलक्षणः । 'अद्रुताम्' अत्वरितां । 'अविलम्बितां' अमन्दां । 'नीचोच्चस्वरसम्पन्नां'(२) अनुदात्तोदात्तस्वरितप्रचयसहितां, 'धृतवतीं' प्रचयवतीं 'समां' उदात्तादिभिर्न्यूनातिरेकादिदोषरहितां(३) 'वदेत्' ब्रूयात्, वृत्तिमित्यर्थः । वृत्तिमिति कथं लभ्यते, अस्मिन् द्वियमान्तरावृत्तिरिति(४) प्रकृतत्वादिति ब्रूमः ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे त्रयोविंशोऽध्यायः ॥ * ॥

---

१ क्रमविक्रमसम्पन्नामिति ग० ।
२ नीचोच्चस्वारसम्पन्नामिति क० ।
३ न्यूनातिरेकरहितामिति क० ।
४ तस्मिन् द्वितीयामान्तरादगतीति ग०। अस्मिन् द्वितीयानन्तरावृत्तिरितीति क० ।

## अथ चतुर्विंशोऽध्यायः।

**अथ चतस्रः सꣳहिताः ॥ १ ॥**

'अथ' इत्यधिकारः(१)। चतस्रः संहिता उच्यन्त इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वच्यामः ॥

**पदसꣳहिताक्षरसꣳहिता वर्णसꣳहिताङ्गसꣳहिता चेति ॥ २ ॥**

'पदाक्षरवर्णाङ्गाश्रयाः चतस्रः(२) संहिताः क्रमेण बोद्धव्याः। पञ्चमाध्यायमारभ्य आनवमादेकादशद्वादशौ त्रयोदशस्यादौ सूत्रचतुष्टयञ्च पदसंहिता। दशमेऽक्षरसंहिता। त्रयोदशचतुर्द्दशौ षोड़शश्च वर्णसंहिता। एकविंशोऽङ्गसंहिता(३)। एताश्चतस्रः संहिताः। एतेष्वन्यत्र च विहितं निषिद्धञ्च कार्य्यं सर्व्वसंहितासु कुर्य्यात्। यत्रार्षग्रहणादिको(४) विशेषो नास्ति ॥

**नानापदसन्धानसंयोगः पदसꣳहितेत्यभिधीयते ॥ ३ ॥**

ननाभूतयोः पदयोः सन्धाने यः संयोगः स 'पदसꣳहिता इति' 'अभिधीयते' उच्यत इत्यर्थः। यथा, अग्ने इदं दुभ्र गह्य किꣳशिल वन्य या ते(५)। एकार्थयोः सन्धानसंयोगयोः(६) प्रयोगः

१ अथेत्ययमधिकार इति ग०, इ० मु० च।

२ पदाक्षरवर्णाङ्गाख्याश्चतस्र इति ग०।

३ व्यञ्जनंस्वराङ्गमित्येषाङ्गसंहिता इति ग०, इ० मु० च।

४ अत्रार्षग्रहणादिक इति ग०।

५ वन्यय ते इषेरिति इ० मु०।

६ सन्धानसंयोगशब्दयोरिति ग०, इ० म० च।

सन्धानाधिक्यार्थः। तथा च वैयाकरणाः भणन्ति(१)। परः सन्निकर्षः संहितेति॥

**यथास्वमक्षरसꣳहितादीनामप्येवम्॥ ४॥**

स्वं स्वमनतिक्रम्य वर्त्तत इति 'यथास्व'' क्रियाविशेषणमेवैतत्। एवमक्षरसꣳहितादीनामपि यथास्वं स्वरूपं निरूपणीयं। नानाक्षरसंयोगोक्षरसंहिता(२)। नानावर्णसंयोगो वर्णसꣳहिता। नानाङ्गसंयोगोङ्गसंहिता। क्रमेणोदाहरणानि भवन्ति(३)। यथा, अथाब्रवीत्। अधिषवणमसि। अक्ष्णया व्याघारयति। केवलस्तयोः संयोगोक्षरसंहिता(४)। एकपदे स्वरव्यञ्जनसंयोगो वर्णसंहिता। एकपदे केवलव्यञ्जनसंयोगोङ्गसंहिता। अन्यत्र पदसंहितेत्यवान्तरभेदो विज्ञेयः॥

**गुरुत्वं लघुता साम्यꣳ ह्रस्वदीर्घप्लुतानिच।**
**लोपागमविकाराश्च प्रकृतिर्विक्रमःक्रमः॥**
**स्वरितोदात्तनीचत्वꣳ श्वासो नादोङ्गमेवच।**
**एतत् सर्वन्तु विज्ञेयं छन्दोभाषामधीयता॥ ५॥**

यद् गुरुत्वाद्यष्टादशविधं, 'एतत् सर्वं'','छन्दोभाषां' वेदरूपां वाचं,'अधीयता' पठता, 'विज्ञेयं'। अथवा 'छन्दोभाषां''वेदलक्षणामित्यर्थः। 'तु' शब्दोऽध्येतृव्यतिरिक्तनिषेधार्थः। अनेन तु सर्वथा विज्ञेयमित्यर्थः। गुरुत्वं यथा, वषट् स्वाहा। लघुता यथा, अकु-

---

१ वैयाकरणाः पठन्तीति ग०, ६० मु० च।

२ नानाक्षरसन्धिरक्षरसंहितेति क०।

३ भणाम इति ग०, ६० मु० च।

४ केवलस्वरयोः संयोगोक्षरसंहितेति ग०, ६० मु० च।

श्त। साम्यं यथा. स्थानकरणकालादिभिरनयोरस्ति तौल्यमिति। ह्रस्वदीर्घप्लुतानि च यथा, गमयति। वायाविवास्य अस्तुहो३। लोपो यथा, ईमन्द्रा सुप्रयसः। आगमो यथा, तपुश्चमे। विकारो यथा,समिन्द्रणः(१)। प्रकृतिर्यथा, अग्ने दुध्र गह्य किल्बिल वन्य या ते। प्रपा असि। मिथुनो अभवन्(२)। विक्रमो यथा, वोढवे। क्रमो नाम द्वित्वं यथा, यद्दे होता। स्वरितोदात्तनीचानां भावः 'स्वरितोदात्तनीचत्वं'। तद्यथाक्रमं निर्दिश्यते, न्यञ्चम्। गां वाव तौ(३)। अवदतां। विवृते श्वास इत्युक्तं। श्वासो यथा, पूते। संवृते कण्ठे नाद(४) इत्युक्तो नादः। यथा, भागधे भागधाः। व्यञ्जनं- स्वराङ्गमित्युक्तमङ्गं यथा, तं मत्स्यः प्राब्रवीत्। विज्ञेयमिति विधिः(५)। विपक्षे बाधाः, मन्त्रो हीनः स्वरतो वर्णतो वेत्यादिना(६) ॥

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः।
स्वरमात्राविभावज्ञो गच्छेदाचार्य्यसंसदं
गच्छेदाचार्य्यसंसदमिति ॥ ६ ॥

पदानां क्रमस्तस्य विशेषः तं जानातीति'पदक्रमविशेषज्ञः'। 'वर्णानां' 'क्रमः' तस्मिन् 'विचक्षणः' निपुणः। 'स्वराश्च मात्राश्च

१ समिन्द्रणो मनसा इति इ० मु०।

२ न मिथुनौ अभवन् इति ग०, इ० मु० च।

३ वाव तौ तदिति ग०,इ० मु० च।

४ नादः क्रियते इति ग०,इ० मु० च।

५ विज्ञेयत्वमिति नित्यविधिरिति ग०, इ० मु० च।

६ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् इति ग०।

'स्वरमात्राः' तेषां 'विभागज्ञः'। 'मात्रा' शब्देन कालविशेषः कश्चिदुच्यते। सोपि चतुरणुरित्यादि। एवंविधः पुरुषो 'गच्छेदाचार्य्यसंसदं' स्थानं। आचार्य्यास्तु व्यासादयः। तेषां ब्रह्मलोको हि स्थानं। यश्चेदं शास्त्रं जानोते सायमाचार्य्यः, तेषां सदनं ब्रह्मलोकं गच्छति। तथा च पौराणिका वदन्ति,

गरुडपुराणे।

आहुः समस्तविद्यानां वेदविद्यामनुत्तमां।
अतस्तद्दातुरस्यैव लाभः स्वर्गापवर्गयोः॥
विद्यानाञ्च परा विद्या ब्रह्मविद्या समीरिता।
अतस्तद्दानतो राजन् सर्वदानफलं(१) लभेत्॥

देवीपुराणे।

वेद एव द्विजातीनां साधनं श्रेयसं परम्।
ततोस्याध्ययनाभ्यासात् परं ब्रह्माधिगच्छति॥
तमेव शीलयेत् प्राज्ञः शिष्येभ्यस्तं प्रदापयेत्।
तदभ्यासप्रदानाभ्यामेतत् किलाधिगच्छति॥

तथा याज्ञवल्क्यः।

यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्म्मणां।
वेद एव द्विजातीनां निःश्रेयसकरः परः॥
योनधोत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥

१ सर्वं दानफलमिति द० मु०।

महाभारतेपि।

यो ब्रूयाच्चापि शिष्याय[१] धर्म्म्यां ब्राह्मीं सरस्वतीम्।
पृथिवीगोप्रदानाभ्यां स दानफलमश्नुते[२] ॥

विष्णुधर्म्मोत्तरे।

वेददानादवाप्नोति सर्वयज्ञफलं नरः।
उपवेदप्रदानेन गन्धर्वैः सह मोदते ॥

ब्रह्मपुराणे।

न तत्कल्पसहस्रेण गदितुं शक्यते फलम्।
यद्वेददानादाप्नोति स्वल्पादपि महामते ॥

भविष्यत्पुराणे[३]।

अपुत्रो लभते पुत्रमधनो लभते धनम्।
वेदाध्ययनयुक्तस्तु परे ब्रह्मणि लीयते ॥

वेदस्वरूपमुच्यते।

यजुर्वेदः पिङ्गलाक्षः कृशमध्यो बृहद्गलः।
बृहत्कपोलकृष्णाङ्घ्रिः स्ताम्रः काश्यपगोत्रजः ॥

वेदाङ्गान्युच्यन्ते।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा।

---

१ शिष्येभ्य इति इ० मु०।  ३ भविष्यपुराणेपि इति इ० मु०।
२ स तुल्यफलमश्नुते इति इ०मु०।

छन्दसां लक्षणञ्चेति षडङ्गानि विदुर्बुधाः ॥
अनुपदञ्चानुपदं छन्दो भाषासमन्वितम् ।
मीमांसान्यायतर्कञ्च तथाङ्गानि विदुर्बुधाः ॥

एवं साङ्गोपाङ्गं वेदं गोत्रस्वरूपादीनि विजानन्नधीयानः पूतो भवति(१) ।

ग्रन्थान्तरे यथा, तद्वदिदं शास्त्रं यदृच्छया ।
अभूतेषु च स्थानेषु पौरुषेयेषु वर्त्तते ॥

तथाहि । प्र नक्षत्राय देव्याय स इन्द्रादमहि कर्म्मकर्त्तवे महामनुं । मह्नि सप्तदशेनावस्युत्राता: । अपिसोदमिथुन्यष्टा च अस्मिंᳬस्तनुवस्तुहि पिनाकमित्यादौ न वर्त्तते । सिंहेव्याघ्र(२) द्वादशाग्निष्टोमस्य स्तोत्राणि आत्मना परां निःप्रशुक्रशोचिषा । उश्मसोपोषमित्यादौतु वर्त्तते । गच्छेदाचार्य्यसंᳬसदं । वीप्सा शास्त्रपरिसमाप्तिं द्योतयति(३) ॥

इति श्रोत्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्विंशोऽध्यायः ॥ * ॥

समाप्तश्चायं ग्रन्थः ॥ * ॥

---

१ एवं साङ्गोपाङ्गवेदस्य लक्षणं सम्पूर्णमिति इ० मु० ।

२ सिंह व्याघ्र उत्पाथदाको इति इ० मु० ।

३ वीप्साशास्त्रपरिसमाप्तिज्ञापनार्थं भवतीति इति ग० ।